


नाव डोले तो क्या बोले? पिकनिक का सच्चा स्वाद है जी.

**पारले-जी**

स्वाद भरे, शक्ति भरे.

भारत के सबसे ज्यादा बिकनेवाले बिस्किट.

everest/93/PP/171-hn

# प्रियवाक्यकथनम्

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥

"प्रियवाक्यं श्रुत्वा सर्वे अपि जीविनः सन्तोषम् अनुभवन्ति। अतः सर्वैः प्रियवाक्यानि एव वक्तव्यानि। प्रियवाक्यकथनेन हानिः तु काऽपि नास्ति, प्रत्युतः महान् लाभः भविष्यति।"

लोके वयं बहून् जानानुरागिणः पश्यामः। जनानाम् अप्रीतेः पात्राणि अपि पश्यामः। जनानुरागः कथं प्राप्यते ? प्रायः अस्माकं वाग्व्यवहारतः एव। ये सर्वेषां प्रियाणि वचनानि वदन्ति तेषु जनाः सहजतया आदरं प्रेम च प्रकटयन्ति। ये प्रियवाक्यं न कथयन्ति ते प्रायः जनानाम् औदासीन्यस्य पात्राणि भवन्ति। ये च अप्रियवाक्यानि कथयन्ति ततः जुगुप्सते लोकः।

तर्हि सर्वदा सर्वत्र प्रियम् एव वक्तुं शक्यते खलु ? इति चिन्तनं स्यात् कदाचित्। किन्तु प्रियवाक्यकथनं न तावत् सुकरम्। अन्ये यदा अस्माकम् अप्रियम् आचरन्ति, अन्येषु यदा वयं दोषं पश्यामः तदा प्रियवाक्यं प्रायः अस्मन्मुखतः न निर्गच्छति। कोपासूयाद्वेषादयः प्रियवाक्यकथनं निवारयन्ति। अतः प्रियवाक्यं सर्वदा वक्तव्यम् इति इच्छा अस्ति चेत् तदनुगुणम् आत्मनः संस्कारः अपि सम्पादनीयः भवति।

यावत् वयम् अन्येषु गुणान् द्रष्टुं न शक्नुमः तावत् प्रियवाक्यानि वक्तुं कष्टम् अनुभवामः। अतः प्रियवाक्यकथनं व्रतरूपेण स्वीकृतं चेत् गुणदर्शनदृष्टिः अस्मासु वर्धते। सम्पादितः कश्चन गुणः रक्षणीयः चेत् अनन्यगतिकतया अन्ये गुणाः अवलम्बनीयाः भवन्ति। एवम् एकः गुणः गुणपरम्पराप्राप्तेः कारणं भवति। प्रियवाक्यकथनरूपः गुणः अपि तादृशः एव।

प्रियं वक्तव्यम् इत्युद्देशेन असत्यमार्गः न आश्रयणीयः। 'प्रियं च नानृतं ब्रूयात्' इति प्राचीनवचनं सर्वदा स्मर्तव्यम्। परोपकारकरणे अस्माकं सामर्थ्यं समयः वा न स्यात्। किन्तु प्रियवाक्यकथनार्थं सर्वोऽपि अवश्यं समयं प्राप्नुयात् एव। अतः यथाशक्ति प्रियम् एव वक्तव्यम्। विना व्ययं विना श्रमं च कर्तुं शक्यं कार्यम् एतत्।

# कार्यक्रमं प्रति गच्छाम

| | |
|---|---|
| सुनन्दा - भगिनि ! अस्ति वा गृहे ? | Sister, you at home ? |
| सावित्री - आम् ! अस्मि । आगच्छतु अन्तः । उपविशतु । | Yes, come in, sit down. |
| सु - गृहकार्यं समाप्तं वा ? | You have finished the daily chores ? |
| सा - इतोऽपि न समाप्तम् । | Not yet. |
| सु - किमर्थम् अद्य विलम्बः ? | Why late today ? |
| सा - मम पुत्रस्य परीक्षा खलु ! अतः प्रातः आरभ्य तं पाठयन्ती आसम् । कः विशेषः ? | My son has examinations, you know. So in the morning I was teaching him for some time. What news ? |
| सु - अद्य सायङ्काले कलाक्षेत्रभवने भरतनाट्यकार्यक्रमः अस्ति । गच्छाम वा इति भवतीं प्रष्टुम् आगतवती । | There is a Bharatanatyam programme in Kalakshetra this evening. I came to find out if we could go. |
| सा - कस्मिन् समये कार्यक्रमः ? | When is the programme ? |
| सु - सप्तवादने कार्यक्रमस्य आरम्भः । | It starts at seven. |
| सा - कार्यक्रमः कदा समाप्तः भवेत् ? | When would it be over ? |
| सु - अष्टवादने समाप्तः भवेत् । यतः घण्टात्मकः कार्यक्रमः सः । | Around eight. It is an hour's programme. |
| सा - भवतु । अहं सायं सार्ध-षट्वादने भवत्याः गृहम् आगमिष्यामि । ततः कार्यक्रमं प्रति गच्छाम । | All right, I will reach your house by 6.30 in the evening. Let us go for the programme from there. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुस्यूततया - Continuous
अन्धविश्वासः - Blind faith
अभिज्ञाय - Having recognised
अलम् - Enough
आतपः - Sunshine
आधारभूमिः - Foundation
आमलकम् - Goose berry
आर्तस्वरः - A wail
आसीनः - Seated
उरसि - In the chest
कारीषम् - Cowdung cake
काष्ठम् - Firewood
कौमुदी - Moonlight
क्रोडीकृत्य - Having made collection of
गुल्मः - Bush
चतुरस्रम् - Square shaped
च्यावितवान् - Dismissed
जामिता - Boredom
जिज्ञासा - Desire to know
तरति - Swims

त्सरुः - Sword handle
निर्याणम् - Death
निर्वर्तितवान् - Fulfilled
निर्विण्णः - Was put out
नीडम् - Nest
पञ्जरम् - Cage
पणः - Bet
परम्परा - Generation
परशुः - Axe
पुरीषम् - Cowdung
बिलम् - Hole
मृगया - Hunting
लुण्ठाकाः - Robbers
वटवृक्षः - Banian tree
वल्मीकः - Ant-hill
वृतिः - Fence
शिबिका - Palanquin
सन्नाहः - Preparation
सिकताः - Sand
सीमा - Border

* * * * * * * *

# चन्दमामा

संस्थापकः - 'चक्रपाणिः'      सञ्चालकः - 'नागिरेड्डी'

## पाठ्यक्रमे इतिहासस्य स्थानम्

भूतकालस्य घटनानाम् उल्लेखः 'इतिहास' शब्देन निर्दिश्यते। एतासां घटनानां कारणीभूताः सूत्रधाराः ये भवन्ति तेषां जीवनविषये कथनं 'जीवनचित्र' नाम्ना निर्दिश्यते। इतिहासः नाम तत्तद्देशस्य आत्मकथनम् इव। अतः विद्यालयानां पाठ्यक्रमेषु इतिहासस्य अपरिहार्यं स्थानम्।

दौर्भाग्यं नाम एषु दिनेषु छात्राः अस्माकं देशस्य प्राचीनसंस्कृतेः इतिहासस्य च अध्ययनार्थं समयम् एव न प्राप्नुवन्ति। तेषां पाठ्यक्रमस्य भारः तावान् भवति यत् ते केषाञ्चित् राज्ञां राष्ट्रनायकानां जनन-मरणादीनां विषये, जयपराजयहेतुभूतानां केषाञ्चित् प्रमुखयुद्धानां विषये च ज्ञानं प्राप्तुं शक्नुवन्ति, न तु ततोऽप्यधिकम्। वस्तुतः तैः बाह्यं ज्ञानं प्राप्यते, न तु सारभूतम् आत्मतुल्यं ज्ञानम्।

इतिहासविषये एतत् अपि सत्यं यत् कश्चित् अन्यदेशानाम् इतिहासम् अपि ज्ञात्वा तुलनात्मकं ज्ञानं यावत् न प्राप्नोति, तावत् तस्य ज्ञानम् अपूर्णम् एव भवति इति। अतः विद्यालयपाठ्यक्रमे राष्ट्राणाम् अभिवृद्धिम् अधिकृत्य तुलनात्मकाध्ययनार्थम् अपि अवकाशः भवेत्।

एतदर्थं सरलः मार्गः नाम प्रतिवर्षम् अस्माकं देशस्य इतिहासेन सह अन्यस्यापि कस्यचित् देशस्य इतिहासं छात्राः यथा जानीयुः तथा करणीयम्। यदि एषा व्यवस्था पञ्चमकक्ष्यायाम् आरभ्यते तर्हि दशमकक्ष्याभ्यन्तरे कश्चन छात्रः भारतस्य इतिहासं सम्यक् जानन् एव षण्णां देशानाम् इतिहासम् अपि ज्ञातुं प्रभवति।

एवं सुविचिन्तितः पाठ्यक्रमः स्यात् इदानीं विद्यालयेषु।

सम्पुटः - ११      नवेम्बर् - १९९४      सञ्चिका - ८

प्रतिकृतिमूल्यं रू. ५.००   *   वार्षिकं ग्राहकशुल्कं रू. ६०.००

**वार्ताविशेषः -**

## पश्चिमैशियादेशे शान्त्यर्थं कृतः द्वितीयः सन्धिः



अगस्त्मासस्य तृतीये दिनाङ्के जोर्डान्-विमानयानं पार्श्वस्थस्य इस्रेल्देशस्य उपरि निरातङ्कम् उड्डयनम् अकरोत्। अत्र का विशेषता इति जिज्ञासा स्यात् खलु। तत् विमानं जोर्डान्देशस्य राजा हुसेन् इबिन् तलाल् स्वयं चालितवान्। जुलैमासस्य २५ दिनाङ्कतः पूर्वम् इस्रेल्देशस्य उपरि प्रयाणं कर्तुं जोर्डान्राजस्य अधिकारः न आसीत्। तस्मिन् एव दिने जोर्डान्देशस्य राजा इस्रेल्देशस्य प्रधानमन्त्री इषाक् राबिन् च ऐतिहासिकसन्धिनिमित्तं हस्ताङ्कनं कृतवन्तौ। एषः सन्धिकार्यक्रमः वाषिङ्गटन्नगरस्य 'रोस्गार्डन्' मध्ये प्राचलत्। अमेरिकादेशस्य अध्यक्षः बिल् क्लिण्टन्वर्यः एतं सन्धिं 'वाषिङ्गटन् डिक्लरेषन्' इति निर्दिशन् साक्षिरूपेण हस्ताङ्कनं कृतवान्।

सद्यःकाले 'रोस्गार्डन्' मध्ये प्रवृत्तेषु सन्धिकार्यक्रमेषु एषः द्वितीयः। प्रथमः सन्धिकार्यक्रमः गते सप्टेम्बर्मासस्य तृतीये दिनाङ्के इस्रेल्देशस्य प्रधानमन्त्रिणः राबिन्वर्यस्य पालस्तीन्विमोचनासंस्थायाः नायकस्य यासर् आराफत्वर्यस्य च मध्ये प्रवृत्तः। बिल् क्लिण्टन्वर्यस्य समक्षं प्रवृत्ते तस्मिन् सन्धौ उभौ अपि हस्ताङ्कनं कृत्वा परस्परं हस्तचालनं कुर्वन्तौ चत्वारिंशतः वर्षेभ्यः अनुवर्तमानं यत् शत्रुत्वम् आसीत् तत् निवारितवन्तौ आस्ताम्।

हुसेन्वर्यः राबिन्वर्यः च 'वाषिङ्गटन् डिक्लरेषन्' नामकसन्धिनिमित्तं हस्ताङ्कनं कृत्वा उभयोः देशयोः मध्ये १९४८तमवर्षतः याः हिंसाः प्रचलन्ति स्म, ताः स्थगितवन्तौ। जोर्डान्राजः विमानयानेन इस्रेल्देशं प्रविश्य राजधानीं टेल्-अविव्नगरं जेरुसलेम्नगरं च परिक्रम्य आगतवान् इत्यतः उभयदेशयोः मित्रत्वं सिद्धम् अभवत्। बहुकालानन्तरं ऐदम्प्राथम्येन विमानं इस्रेल्देशं प्रविष्टम् इति यत्, ततः वक्तुं शक्यते यत् 'वाषिङ्गटन् डिक्लरेषन्' सन्धिः इव एषा अपि अविस्मरणीया घटना इति।

सुदीर्घकालं यावत् उभयदेशयोः यः द्वेषः, यच्च घर्षणम् आसीत्, तत् सर्वं विस्मृत्य उभौ अपि देशौ मित्रदेशौ जातौ। एतस्य कारणं परिस्थितिः च अस्माभिः परिशीलनीयम्।

जोर्डान्नदीतीरे फलवती भूमिः अस्ति। अतः जनाः क्रि.पू. ४०० तमे वर्षे एव तत्र गत्वा वासम् आरब्धवन्तः। ६४ तमे वर्षे जोर्डान्प्रदेशः तत्कालीनरोमन्साम्राज्यस्य अधीनः अभवत्। षष्ठे शतके तत् अरब्जनानाम् अधीनः अभवत्। १०९६ - ९९ कालीनावधौ सः प्रदेशः युरोपीयानां कैस्तानाम् अधीनः अभवत्। १६ शतके सः प्रदेशः टर्क्जनानां वशः जातः। ततः आरभ्य प्रथमजागतिकयुद्धपर्यन्तम् अपि

(१९१४ - १८) ओटमन्साम्राज्यस्य अन्तर्भागत्वेन आसीत् । अरब्जनाः स्वातन्त्र्यम् इच्छन्तः टर्क्जनानां सम्मुखीकरणं कृतवन्तः । अस्मिन् युद्धे ब्रिटिष्जनाः अरब्जनानां साहाय्यम् अकुर्वन् । ततः ट्रान्स् जोर्डान्नामकं राज्यं प्रकल्प्य तस्य रक्षणाधिकारं ब्रिटिष्जनेभ्यः अयच्छत् । सः प्रदेशः त्रिंशद्-वर्षाणि यावत् ब्रिटिष्जनानाम् अधिकारे आसीत् । १९४६ तमे वर्षे ट्रान्स् जोर्डान्देशः स्वातन्त्र्यं प्राप्तवान् । हेष् मैद्वर्यः तस्य देशस्य राजा भूत्वा १९४९ तमे वर्षे स्वराज्यस्य 'हेष् मैद् जोर्डान्' इति नामकरणं कृतवान् । १९५९ तमे वर्षे यदा हुसेन्वर्यः राजा जातः, तदा हुसेन्वर्यस्य वयः १७ वर्षाणि । एषः एव दीर्घकालं यावत् अधिकारावधौ स्थितः अरब्नायकः ।

इस्रेल्राज्यं यदा पृथक् जातम्, तदा अरब्जनैः सह इस्रेल्जनानां घर्षणम् आरब्धम् । इस्रेल्वशे स्थितायाः जोर्डान्नद्याः पश्चिमतीरम् अरब्जनाः आक्रान्तवन्तः । विंशतिवर्षेभ्यः अनन्तरं १९६८ तमे वर्षे प्रवृत्ते षड्दिनात्मके युद्धे इस्रेल्देशः पुनरपि तं प्रदेशं स्वाधीनं कृतवान् । एतेन १९८७ तमे वर्षे हुसेन्वर्यः जोर्डान्नद्याः पश्चिमतीराधिकारं प्राप्तुं, पालस्तीन्विमोचनासंस्था स्वस्वातन्त्र्यं प्रकटयितुं च शक्तौ जातौ ।




४६ वर्षेभ्यः यत् शत्रुत्वम् आसीत् तत् परित्यज्य शाश्वतशान्त्यर्थं प्रयत्नः करणीयः इति जोर्डान्-इस्रेल्देशौ परस्परं 'वाषिङ्गटन् डिक्लरेषन्' नामकसन्धिपूर्वकं सङ्कल्पं कृतवन्तौ । हुसेन्वर्यः यदा विमानं चालितवान्, तदा उभयदेशीयाः अपि प्रजाः आनन्दोत्साहेन नृत्यं कृतवत्यः । उभयोः देशयोः मध्ये विद्यमाना अयसः वृतिः अपि निष्कासिता ताभिः प्रजाभिः । इस्रेल्देशस्य प्रधानमन्त्री राबिन्वर्यः हुसेन्वर्यं स्वदेशं प्रति आमन्त्रितवान् । हुसेन्वर्यः एतत् आमन्त्रणं सन्तोषेण अङ्गीकृतवान् ।



# महाज्ञानी

पूर्वं कश्चित् पण्डितः आसीत् । तस्य नाम सुब्रह्मण्यशास्त्री । सः कदाचित् महाराजस्य आस्थानं गत्वा वादेन तत्रत्यान् पण्डितान् पराजितान् कृतवान् । तदा महाराजः सन्तोषेण सुब्रह्मण्यशास्त्रिणः सत्कारं कृत्वा तस्मै पारितोषिकादिकं यच्छन् उक्तवान् – "पण्डितोत्तम ! अस्माकं देशे चन्द्रपुरनामकं किञ्चन नगरम् अस्ति । तत्रत्याः जनाः सर्वरङ्गेषु अपि प्रगतिं साधितवन्तः सन्ति । किन्तु मया श्रुतं यत् – चन्द्रपुरस्य जनेषु स्वार्थचिन्तनम् अधिकं जातम् अस्ति इति । चन्द्रपुरस्य प्रमुखाः केऽपि राजधानीं प्रति न आगच्छन्ति । या कापि समस्या भवतु, ते स्वयम् एव समस्यायाः परिहारम् अन्विष्यन्तः जीवनं यापयन्ति । चन्द्रपुरे एकः अपि देवालयः नास्ति । दैवभक्ताः अपि न सन्ति । कृपया भवता तत्र गत्वा तत्रत्येषु जनेषु चैतन्यम् उत्पादनीयम्, ते च बोधनीयाः इति मम प्रार्थना" इति ।

सुब्रह्मण्यशास्त्री महाराजस्य वचनम् अङ्गीकृत्य चन्द्रपुरं गतवान् । चन्द्रपुरस्य ज्येष्ठः कश्चित् सुब्रह्मण्यशास्त्रिणम् आदरेण सत्कृत्य तस्य वासार्थं सर्वविधव्यवस्थां कृतवान् ।

सुब्रह्मण्यशास्त्री तं ज्येष्ठं स्वपरिचयं वदन् उक्तवान् – "मम प्रतिभायाः विषये महाराजस्य महत् गौरवम् अस्ति । महाराजस्य सकाशात् भवतः कार्यं किमपि साधनीयम् अस्ति चेत् मद्द्वारा सुलभतया कारयितुं शक्नोति भवान्" इति ।

तदा नगरस्य ज्येष्ठः उक्तवान् – "भवतः आगमनोद्देशं प्रथमं वदतु तावत्" इति ।

तदा शास्त्री उक्तवान् – "अस्माकं जीवने दैवभक्तेः कियत् प्राधान्यम् अस्ति इति विषये चन्द्रपुरस्य जनान् बोधयितुम्

'अनामिका'

इच्छामि अहम्। अतः कृपया काचित् सभाम् आयोजयतु भवान्'' इति।

सभायाः व्यवस्था कृता। बहवः जनाः कार्यक्रमार्थम् आगतवन्तः। सुब्रह्मण्यशास्त्री देवविषये सुदीर्घम् उपन्यासं कृतवान्। सभासदां ये सन्देहाः आसन्, तेषां तृप्तिकरम् उत्तरम् उक्तवान् सुब्रह्मण्यशास्त्री।

प्रथमदिनस्य प्रवचनसमाप्त्यनुक्षणं वृद्धः कश्चित् सुब्रह्मण्यशास्त्रिणः समीपम् आगत्य - ''वत्स! भवतः प्रवचनसमये अहं भवन्तम् एव परिशीलयन् आसम्। मध्ये मध्ये भवतः ललाटे रेखाः दृश्यन्ते स्म। तदा तदा भवान् ललाटं दृढं गृह्णाति स्म। एतत् तु शिरोवेदनायाः लक्षणम्'' इति वदन् एकां लघुकूपीं शास्त्रिणे यच्छन् - ''एतत् औषधं प्रातः रात्रौ च बिन्दुद्वयं यावत् स्वीकरोतु। भवान् शिरोवेदनातः मुक्तः भविष्यति'' इति उक्त्वा ततः गन्तुम् उद्युक्तः।

तदा सुब्रह्मण्यशास्त्री वृद्धम् उक्तवान् - ''तात! मद्विषयकेण भवतः अभिमानेन अतीव सन्तुष्टः अहम्। भवतः या कापि इच्छा यदि स्यात्, तर्हि वदतु माम्। ताम् अहं महाराजद्वारा पूरयिष्यामि'' इति।

एतत् श्रुत्वा वृद्धः मन्दहासं प्रकटयन् ततः निर्गतवान्।

चन्द्रपुरस्य जनाः केचन स्वकीयाः इच्छाः सुब्रह्मण्यशास्त्रिणं निवेदितवन्तः। शास्त्री सर्वेभ्यः वचनं दत्तवान् यत् - अहं महाराजद्वारा भवताम् इच्छाः पूरयिष्यामि इति।

दिनद्वयम् अतीतम्। सुब्रह्मण्यशास्त्री कदाचित् वीथ्यां गच्छन् आसीत्। पूर्वं



शिरोवेदनानिमित्तं यः औषधं दत्तवान् आसीत्, सः एव वृद्धः मार्गे मिलितवान् । वृद्धः सुब्रह्मण्यशास्त्रिणम् उद्दिश्य - ''वत्स ! किमर्थं भवान् अस्मिन् तीव्रातपे अटति ? पूर्वम् एव भवान् शिरोवेदनया पीड्यमानः अस्ति । एतत् छत्रं स्वीकरोतु'' इति वदन् स्वकीयं छत्रं सुब्रह्मण्यशास्त्रिणे अनुरोधपूर्वकं दत्त्वा गतवान् ।

वृद्धस्य व्यवहारेण सुब्रह्मण्यशास्त्री आश्चर्यचकितः ।

सप्ताहः अतीतः । सुब्रह्मण्यशास्त्रिणः वचनानुसारं चन्द्रपुरस्य जनाः देवालयनिर्माणम् अङ्गीकृतवन्तः । सर्वे अपि सुब्रह्मण्यशास्त्रिणं सविनयं प्रार्थितवन्तः यत् - 'देवालयनिर्माणार्थम् आधारभूमेः शिलास्थापनं महाराजस्य हस्ततः एव भवेत् इति, तस्मिन् समये भवता उपन्यासः करणीयः इति च । सुब्रह्मण्यशास्त्री एतत् सर्वम् अङ्गीकृतवान् ।

कानिचन दिनानि अतीतानि । सुब्रह्मण्यशास्त्री राजधानीं प्रतिगन्तुम् उद्युक्तः । तदा वृद्धः तत्र आगत्य - ''वत्स ! प्रयाणसमये भवान् श्रान्तः भवति चेत् एतान् आमलकान् खादतु । तेन भवतः श्रान्तिः अपगता भविष्यति । आमलकस्य एतत् औषधं मया एव निर्मितम् अस्ति'' इति वदन् आमलकलेह्यस्य एकां कूपीं दत्तवान् ।

एतस्मात् अतीव सन्तुष्टः सुब्रह्मण्यशास्त्री वृद्धम् उक्तवान् - 'भवान् यत् इच्छति, तत् पृच्छतु । अहं दास्यामि' इति । किन्तु वृद्धः शास्त्रिणं किमपि न पृष्टवान्, अपि तु मौनं ततः निर्गतवान् ।





तदा सुब्रह्मण्यशास्त्री तत्रैव पार्श्वे स्थितं नगरस्य प्रमुखं कञ्चित् उक्तवान् - ''भोः, एषः वृद्धः प्रायशः मद्विषये सम्यक् जानाति । सः मत्तः किमपि साहाय्यम् इच्छति इति मन्ये। अतः एव बहुवारं सः मम अनुग्रहपात्रं भवितुं प्रयत्नं कृतवान् । किन्तु आश्चर्यं नाम सः वृद्धः कदापि स्वस्य आवश्यकता का इति मां न उक्तवान्। भवत्सु यः कोऽपि तं वृद्धं पृष्ट्वा तस्य आवश्यकता का अस्ति इति निस्सङ्कोचं मां वदतु कृपया। तत् ज्ञात्वा एव अहम् इतः निर्गमिष्यामि'' इति।

तदा नगरप्रमुखः मन्दहासपूर्वकम् उक्तवान् - ''सः वृद्धः वैद्यविद्यायाम् अतीव निपुणः। प्रथमदिने एव शिरोवेदनानिवारकं तेन दत्तम् औषधं भवान् स्वीकृतवान् खलु!'' इति।

''अहं तु औषधं स्वीकृतवान् । मम शिरोवेदना पूर्णतः अपगता अपि । सः महावैद्यः सन् अपि मत्तः किमपि निरीक्षते इति भाति'' इति उक्तवान् सुब्रह्मण्यशास्त्री।

अनुक्षणं ग्रामप्रमुखः उक्तवान् - ''सः वृद्धः भवत्तः कामपि निरीक्षां न करोति, किमपि साहाय्यं न इच्छति च'' इति।

एतत् श्रुत्वा आश्चर्येण शास्त्री पृष्टवान् - ''वृद्धः मत्तः साहाय्यं न इच्छति इति विषयं भवान् कथं जानाति ?'' इति।

तदा ग्रामप्रमुखः उक्तवान् - ''सः वृद्धः महाज्ञानी अस्ति। सर्वशास्त्रपारङ्गतं तं वादेन अपि कोऽपि जेतुं न शक्नोति । चन्द्रपुरवासिनः सर्वे अपि तस्य वृद्धस्य वचनं वेदवाक्यं मन्यन्ते । तस्य कारणतः एव चन्द्रपुरे काऽपि समस्या नास्ति । तस्य वचनानुसारम् एव एतावत्पर्यन्तम् अपि कोऽपि देवालयः न निर्मितः'' इति।

तदा सुब्रह्मण्यशास्त्री उक्तवान् - ''एवं तर्हि मम प्रवचनस्य श्रवणात् भवद्भिः ज्ञातं स्यात् 'वृद्धस्य चिन्तनरीतिः सम्यक् नास्ति' इति । अन्यथा भवन्तः देवालयनिर्माणं न अङ्गीकरिष्यन्'' इति।

तदा ग्रामप्रमुखः शास्त्रिणः वचनस्य अनङ्गीकारपूर्वकं शिरः चालयन् उक्तवान् - ''भवान् तस्य वृद्धस्य विषये अन्यथा चिन्तितवान् अस्ति । यतः भवतः आगमनविषयं वयं पूर्वमेव वृद्धं सूचितवन्तः आस्म। सः वृद्धः अस्मान् सूचितवान् आसीत्

यत् - भवता उच्यमानं सर्वम् अस्माभिः अङ्गीकरणीयम् इति'' इति।

एतत् श्रुत्वा सुब्रह्मण्यशास्त्री गर्वेण उक्तवान् - ''प्रायशः सः वृद्धः मया सह वादं कर्तुं भीतः स्यात् । महाराजस्य आस्थानपण्डितान् एव अहं पराजितान् कृतवान् अस्मि । अतः तस्य भयं सहजम् एव'' इति।

तदा ग्रामप्रमुखः उक्तवान् - ''तथा न। वस्तुस्थितिः अन्या एव। यतः सः वृद्धः तु महाज्ञानी। अपि च वैद्यकीयम् अपि जानाति सः। अतः सः कदापि रोगिभिः सह वादं कर्तुं न इच्छति'' इति।

एतत् श्रुत्वा सुब्रह्मण्यशास्त्री खेदेन पृष्टवान् - ''भवतः कथनस्य तात्पर्यं यत् अहं रोगी इति। एवं खलु ?'' इति।

तदा ग्रामप्रमुखः उक्तवान् - ''सः वृद्धः आरम्भतः अपि भवन्तं रोगिणं विचिन्त्य श्रद्धया भवन्तं सुसूक्ष्मं परिशीलयन् शिरोवेदनानिवारणार्थम् औषधं दत्तवान् । आतपे गच्छते भवते छत्रं दत्तवान् । प्रतिप्रयाणसमये श्रान्तिनिवारणार्थं च आमलकस्य औषधं दत्तवान् इति। एतावदेव न, तस्य दृष्ट्या महाराजः अपि रोगी एव। स्वदेशे यस्मिन् कस्मिन् राज्ये वा जनाः यदि सन्तोषेण जीवन्ति, तर्हि महाराजेन सन्तोषः अनुभोक्तव्यः । किन्तु चन्द्रपुरस्य सुखमयं जनजीवनं श्रुत्वा अपि महाराजः दुःखम् अनुभवति इति यत्, तत् तु अनारोग्यस्य एव लक्षणम्। पण्डितः भवान्



महाराजस्य एतादृशीं मनःस्थितिम् अवगत्य अपि तस्य आशयानुसारम् अत्र आगतवान् इति यत्, तदपि रोगलक्षणम् एव । येषां बोधनस्य आवश्यकता नास्ति, तान् उद्दिश्य प्रवचनकरणम् अपि अनारोग्यस्य लक्षणम् एव इति वृद्धः अस्मान् पूर्वम् एव उक्तवान् आसीत्'' इति।

एतत् श्रुत्वा कुपितः सुब्रह्मण्यशास्त्री उच्चस्वरेण पृष्टवान् - ''एवं तर्हि मया उक्तं सर्वं किमर्थं श्रुतवन्तः चन्द्रपुरस्य जनाः ? किमर्थं सर्वम् अङ्गीकृतवन्तः ? किमर्थं च मत्समीपे स्वकीयाः इच्छाः प्रकटितवन्तः ?'' इति।

तदा ग्रामप्रमुखः शान्तस्वरेण उक्तवान् - ''एतत् सर्वं महाज्ञानिना तेन वृद्धेन क्रियमाणः भवतः रोगस्य चिकित्साक्रमः ।

अस्माकं व्यवहारकारणतः भवान् खिन्नः न भवेत् इति तस्य आशयः । वृद्धस्य सूचनानुसारम् एव वयं सर्वे भवता उक्तं सर्वम् अङ्गीकृतवन्तः, काश्चन इच्छाः च प्रकटीकृतवन्तः । वस्तुतः अस्माभिः याः इच्छाः प्रकटिताः, तद्विषये अस्माकम् आसक्तिः किञ्चिदपि नास्ति'' इति।

एतत् सर्वं श्रुत्वा सुब्रह्मण्यशास्त्री शान्तस्वरेण उक्तवान् - ''भवतः कथनानुसारं सः वृद्धः महाज्ञानी एव स्यात्। किन्तु सः दैवे भक्तिमान् न इति मम सन्देहः । यतः अस्मिन् नगरे एकः अपि देवालयः नास्ति । प्रवचनादिकार्यक्रमाः न सन्ति । तथापि तं वृद्धं महाज्ञानिनं मन्यमानाः भवन्तः तस्य प्रशंसां कुर्वन्तः सन्ति'' इति।

तदा ग्रामप्रमुखः उक्तवान् - ''भवान् महान् पण्डितः बुद्धिमान् च अस्ति इत्यतः मया अधिकं वक्तव्यं नास्ति। सः वृद्धः यद्यपि दैवभक्तिविषयं न बोधयति, तथापि मानवैः अस्माभिः आचरितुं योग्यं धर्मं स्वव्यवहारेण स्वजीवनशैल्या च बोधयति । सर्वेषु अपि गौरवप्रदर्शनं, कष्टे स्थितानां साहाय्यकरणं च अस्मान् बोधितवान् अस्ति सः। 'जनसेवा एव जनार्दनसेवा' इति कथयति सः'' इति।

एतत् श्रुत्वा सुब्रह्मण्यशास्त्रिणः मुखं विवर्णं जातम् । तस्मिन् विवेकः उदितः । किञ्चित्कालानन्तरं सः उक्तवान् - ''अद्यपर्यन्तम् अपि अहम् एव श्रेष्ठः पण्डितः इति चिन्तयन् महान्तं गर्वम् अनुभूतवान् अहम् । एतदपि कस्यचन रोगस्य लक्षणम् इति इदानीं ज्ञातवान् अहम् । किन्तु मम रोगस्य चिकित्सा इतोऽपि पूर्णतः न समाप्ता । अतः अहं कञ्चन कालं यावत् अस्मिन् नगरे एव स्थित्वा महाज्ञानिनः सकाशात् प्रयोजनं प्राप्तुम् इच्छामि'' इति।

अनन्तरं सुब्रह्मण्यशास्त्री कानिचन दिनानि चन्द्रपुरे स्थित्वा महाज्ञानिनः सहवासात् बहून् विषयान् ज्ञातवान् । आत्मना ज्ञातान् विषयान् पत्रे लिखित्वा पत्रं महाराजाय प्रेषितवान्। एतस्मात् प्रकरणात् महाराजः स्वदोषं ज्ञातवान्।





# कीर्तिसिंहकथा
## ५

(कीर्तिसिंहः गुरुकुले स्वविद्याभ्यासं समाप्य गुरोः कृष्णचन्द्रस्य आशीर्वादं प्राप्य राजधानीं प्रति प्रस्थितवान् । मध्येमार्गं आरावलीपर्वतप्रदेशस्य क्रमणसमये कीर्तिसिंहस्य बन्धनार्थं तत्र आगताः केचन शत्रुभटाः अयसः जालं क्षिपन्तः । तावता तत्र गुप्तरूपेण स्थिता पुरुषवेषधारिणी शक्तिसेना शत्रुभटान् बाणप्रयोगेण मारितवती । कीर्तिसेनः शक्तिसेनाम् अभिज्ञाय तया दत्तं पत्रं पठितवान् । शक्तिसेना कीर्तिसिंहः च अरण्यमध्यस्थं देव्याः आलयं गत्वा देवीं नमस्कृत्य हारस्य अन्वेषणम् आरब्धवन्तौ । अनन्तरम् ...)

कीर्तिसेनः शक्तिसेनां प्रति प्रत्युत्तरं किमपि अवदन् देव्याः आलयं गत्वा पुरातनं त्रिशूलम् आनीतवान् ।

'खननं कुत्र कृतं चेत् लाभः भवेत् ? बिल्ववृक्षस्य अधोभागे खननेन अपि किमपि प्रयोजनं नास्ति । यतः बिल्ववृक्षस्य मूलानि सर्वत्र सम्यक् प्रसृतानि भवन्ति । एतत् पत्रं तु आधारमात्रम् । पत्रे विद्यमानानाम् अंशानाम् आधारेण खननं कुत्र करणीयम् इति निश्चेतव्यम्' इति विचिन्त्य कीर्तिसिंहः बिल्ववृक्षस्य उत्तरभागं गतवान् । बिल्ववृक्षस्य उत्तरभागे पादत्रयपरिमितदूरे सूक्ष्मं परिशीलितवान् । तत्र सस्यानां मध्ये चतुरस्राकारिका प्राकारस्य काचित् शिला दृष्टिगोचरा जाता ।

एतत् एव चिह्नं स्यात् इति विचिन्त्य



कीर्तिसिंहः त्रिशूलेन तां शिलाम् अपसारितवान्। तत्रैव खननम् आरब्धवान् च। कीर्तिसिंहः यदा खननम् आरब्धवान्, तदा शक्तिसेना कीर्तिसिंहम् एव पश्यन्ती मनसा एव देवीं प्रार्थितवती - "अम्ब ! स्वराज्यार्थं, स्वप्रजानां हितार्थं च युवराजः कीर्तिसिंहः बद्धकटिः सन् अत्यन्तं परिश्रमं कुर्वन् अस्ति इति यत्, तत् भवती जानाति एव। 'स्वकार्ये सः जयं यथा प्राप्नुयात् तथा अनुगृह्णातु कृपया' इति अहं भवतीं सविनयं प्रार्थये। भवती शरणागतयोः आवयोः रक्षणं भवती अवश्यं करिष्यति इति अहं दृढं विश्वसिमि" इति।

त्रयपरिमितं खननं यदा कृतं तदा की सिंहेन एका लघ्वी अयसः पेटिका प्राप्ता। शिथिलां तां पेटिकाम् उद्घाटितवान् कीर्तिसिंहः। अयसः पेटिकायाः अन्तः एका कांस्यपेटिका आसीत्। कुतूहलेन कांस्यपेटिकाम् उद्घाटितवान् कीर्तिसिंहः। कांस्यपेटिकायाः अन्तः एका रजतपेटिका आसीत्। रजतपेटिकायाः अन्तः रजतमयं पत्रमेकम् आसीत्।

रजतपत्रे सुवर्णाक्षरैः एवं लिखितम् आसीत् - "सृष्टिः, सृष्टिकर्तुः गृहे, सृष्टिकर्तुः शरीरस्य अर्धभागे अस्ति" इति।

अनन्तरं कीर्तिसिंहः कांस्यपेटिकां अयसः पेटिकायां यथापूर्वं संस्थाप्य तां पेटिकां भूमौ निक्षिप्तवान्। रजतपेटिकां केवलां स्वीकृत्य स्ववक्षे सुरक्षितं स्थापितवान्।

तावता सायङ्कालः जातः। रात्रिरपि आसन्ना। किन्तु तद्दिनं कृष्णप्रतिपत् आसीत् इति कारणतः कृष्णपक्षचन्द्रः कान्त्या शोभते स्म। सर्वत्र कौमुदी प्रसृता आसीत्।

अनन्तरं शक्तिसेना कीर्तिसिंहः च ततः पुनः देव्याः आलयं गतवन्तौ। भक्त्या देवीं साष्टाङ्गं नमस्कृतवन्तौ च।

कीर्तिसिंहः देवीं नमस्कुर्वन् प्रार्थितवान् - "अम्ब ! करुणासागरे ! भवत्याः कृपाकारणतः एव सर्वं कार्यं निर्विघ्नं प्रचलत् अस्ति। माम् अनुगृह्णती भवती मयि महत् उत्तरदायित्वम् आरोपितवती अस्ति। अहं भवतीं प्रतिदिनं पूजयन् आनन्दं यथा प्राप्नुयां, तथा माम् अनुगृह्णातु कृपया" इति।



नाम्ना एतां शक्तिदेवीं तस्मिन् देवालये प्रतिष्ठापयतु। तस्मात् भवान् सन्मङ्गलानि प्राप्स्यति'' इति।

एतत् श्रुत्वा शक्तिसेना कीर्तिसिंहः च अतीव सन्तुष्टौ।

तौ उभौ अपि पुनरपि देवीं प्रणम्य ज्वालामुखीदेव्यै कृतज्ञतां समर्पितवन्तौ। अनन्तरं तौ देवालयतः बहिः आगत्य मुख्यद्वारं पिधाय यथापूर्वं कीलितवन्तौ। अनन्तरं च स्वकीयम् अश्वम् आरुह्य राजधानीं प्रति प्रस्थितवन्तौ च।

देवालयात् कीर्तिसिंहस्य शक्तिसेनायाः च निर्गमनानन्तरं देवालयः अन्धकारमयः जातः।

कौमुदीप्रकाशे वायुवेगेन प्रयाणं कुर्वन्तौ शक्तिसेना कीर्तिसिंहः च अनन्तरदिने मध्याह्नसमये राजधानीं प्राप्तवन्तौ।

राजधानीं प्राप्य कीर्तिसिंहः शक्तिसेनाम् उक्तवान् - ''इदानीं भवती साक्षात् भवत्याः गृहं गच्छतु। अहं पित्रा महाराजेन सह अनन्तरं भवत्याः गृहम् आगमिष्यामि'' इति।

कीर्तिसिंहस्य वचनं श्रुत्वा शक्तिसेना अङ्गीकारपूर्वकं शिरः चालयन्ती स्वगृहं प्रति प्रस्थिता। कीर्तिसिंहः ततः साक्षात् अन्तःपुरं गतवान्।

पुत्रस्य कीर्तिसिंहस्य आगमनम् एव प्रतीक्षमाणौ आस्तां तस्य मातापितरौ। तौ गुरुकुलात् आगतं पुत्रं दृष्ट्वा अतीव सन्तुष्टौ। किञ्चित्कालं यावत् कुशलसम्भाषणं

कीर्तिसिंहस्य प्रार्थनासमाप्त्यनुक्षणम् एव आलये उज्ज्वला कान्तिः दृष्टा। समग्रे आलये प्रकाशः प्रसृतः। तस्मिन् प्रकाशे कृष्णवर्णीयः शक्त्याः विग्रहः अतीव कान्त्या प्रकाशते स्म। शक्तिदेव्याः मुखं पूर्वापेक्षया अपि प्रसन्नं दृश्यते स्म। शक्तिदेवी मन्दहासं प्रकटयन्ती अस्ति इव भासते स्म।

एतस्मात् अतीव सन्तुष्टौ शक्तिसेना-कीर्तिसिंहौ देवीं पुनरपि भक्त्या साष्टाङ्गं नमस्कृतवन्तौ।

तावता काचित् अशरीरवाणी श्रुता - ''वत्स! कीर्तिसिंह! भवतः राजधान्याः सुगन्धिजलसरोवरस्य पार्श्वस्थे प्रदेशे एकं देवालयं निर्मातु भवान्। आगामिन्यां चैत्रशुद्धदशम्यां शुक्रवासरे 'ज्वालामुखी'

प्रवृत्तम् । अनन्तरं कीर्तिसिंहः पितरं रहस्यस्थानं नीत्वा मध्येमार्गं प्रवृत्तं सर्वं निवेदितवान् ।

पुत्रस्य वचनं श्रुत्वा अतीव सन्तुष्टः राजा कीर्तिसिंहम् उद्दिश्य - ''वत्स ! वयं धन्याः । देवी अस्मान् अवश्यम् अनुग्रहीष्यति । इदानीं हारः कुत्र अस्ति ? तद्विषये भवान् किं चिन्तितवान् ?'' इति पृष्टवान् ।

तदा कीर्तिसिंहः मन्दहासपूर्वकम् उक्तवान् - ''अपूर्वहारः सद्यः एव अस्माभिः प्राप्यते । तदर्थम् एव आवाभ्यां जयसेनस्य गृहं गन्तव्यम् अस्ति'' इति ।

''भवतु, अद्य रात्रौ जयसेनस्य गृहं गच्छाव'' इति उक्तवान् राजा सुषेणः ।



तस्मिन् दिने रात्रौ भोजनानन्तरं कीर्तिसिंहः, सुषेणः च जयसेनस्य गृहं गतवन्तौ । महाराजं सुषेणं युवराजं कीर्तिसिंहं च जयसेनः आदरेण सत्कुर्वन् उक्तवान् - ''अद्य भवन्तौ गृहम् आगच्छतः इति मम पुत्री उक्तवती आसीत्'' इति ।

महाराजः सुषेणः, कीर्तिसिंहः, जयसेनः च किञ्चित्कालं यावत् कुशलसम्भाषणं कृतवन्तः । अनन्तरं महाराजः सुषेणः जयसेनं पृष्टवान् - ''जयसेन ! भवतः गृहे पुरातनः सरस्वतीविग्रहः अस्ति वा ?'' इति ।

महाराजस्य प्रश्नं श्रुत्वा जयसेनः आश्चर्येण - ''अस्ति पुरातनः कश्चन विग्रहः'' इति वदन् गृहस्य अन्तः गत्वा वीणां वादयन्त्याः सरस्वत्याः विग्रहम् आनीतवान् । विग्रहं महाराजाय यच्छन् उक्तवान् - ''अस्माकं पूर्वजाः एतं विग्रहं कारितवन्तः आसन् इति श्रुतवान् अहम् । किन्तु भवान् अपि एतम् एव विग्रहं पृष्टवान् इति यत् तत् आश्चर्यं जनयति मम'' इति ।

तदा कीर्तिसिंहः मन्दहासपूर्वकं जयसेनं पृष्टवान् - ''भवतः पुत्री अपि एतम् एव विग्रहं पृष्टवती वा ?'' इति ।

तदा जयसेनः उक्तवान् - ''आम् ! मम पुत्री शक्तिसेना गृहं प्रति आगमनानुक्षणम् एव पृष्टवती यत् - पुरातनः सरस्वतीविग्रहः कोऽपि अस्ति वा ? इति । अहम् एतं पुरातनविग्रहम् आनीय दत्तवान् । शक्तिसेना विग्रहं स्वप्रकोष्ठं नीत्वा बहुकालं यावत् एकाकिनी प्रकोष्ठे एव उपविष्टवती आसीत् ।



अनन्तरं च प्रकोष्ठात् बहिः आगत्य विग्रहं यथास्थानं स्थापितवती । यदा अहं कारणं पृष्टवान्, तदा सा - 'अद्य रात्रौ कीर्तिसिंहः महाराजः च आगमिष्यतः। तौ विषयं भवन्तं वदतः' इति माम् उक्तवती'' इति।

एतत् श्रुत्वा कीर्तिसिंहः हसन् उक्तवान् - ''अस्माकम् आगमनस्य आशयः विग्रहस्वीकरणं तु न'' इति।

तावता तत्र आगता शक्तिसेना कौशेयवस्त्रेण गोपिताम् एकां लघ्वीं दन्तपेटिकां कीर्तिसिंहाय दत्तवती । कीर्तिसिंहः तां पेटिकां महाराजाय दत्तवान्।

महाराजः सुषेणः दन्तपेटिकाम् उद्घाटितवान् । पेटिकायां कान्त्या प्रकाशमानः नवरत्नपदकयुक्तः अपूर्वः मौक्तिकहारः आसीत्।

अपूर्वस्य हारस्य दर्शनेन आश्चर्यचकितः महाराजः शक्तिसेनां पृष्टवान् - ''भवती कुतः एतं हारं प्राप्तवती ?'' इति।

तदा शक्तिसेना सविनयं महाराजं उद्दिश्य उक्तवती - ''शक्तेः आलयसमीपे खननात् यत् रजतपत्रं लब्धम्, तत्र एवं लिखितम् आसीत् - 'सृष्टिः, सृष्टिकर्तुः गृहे, सृष्टिकर्तुः शरीरस्य अर्धभागे अस्ति' इति । एतस्य तात्पर्यं किं स्यात् इति अहं देवालयतः आगमनसमये चिन्तितवती । यत् सृष्टं भवति, तत् सर्वं सृष्टिः इत्युच्यते । यः सृजति, सः सृष्टिकर्ता । तदनुसारम् एतस्य अपूर्वहारस्य सृष्टिः अस्माकं पूर्वजैः कृता अस्ति । पूर्वजः नाम जयसेनः एव । अतः जयसेनः एव एतस्य हारस्य सृष्टिकर्ता इति तु सुस्पष्टम्। 'सृष्टिकर्तुः गृहम्' इत्युक्ते अस्माकं गृहम् । 'सृष्टिकर्ता' इत्यस्य ब्रह्मा इत्यपि अर्थः स्यात् इति मया ऊहितम्। 'सृष्टिकर्तुः अर्धभागे अस्ति' इत्यस्य तात्पर्यम् - 'सृष्टिकर्तुः पत्नी सरस्वतीदेवी । तस्याम् अस्ति' इति । पत्रस्य अर्थम् एवंरूपेण अवगतवती अहं गृहम् आगत्य मम पितरं विग्रहं पृष्टवती । सूक्ष्मतया विग्रहस्य परिशीलनेन एषः हारः प्राप्तः मया'' इति।

शक्तिसेनायाः वचनं श्रुत्वा सर्वे अपि सन्तुष्टाः।

अनन्तरं राजा सुषेणः मन्दहासपूर्वकं जयसेनम् उद्दिश्य - ''जयसेन ! सर्वं कार्यं

निर्विघ्नं समाप्तम् । इदानीम् अस्माकं पणविषये चिन्तनीयम् अस्ति'' इति उक्तवान् ।

महाराजस्य वचनं श्रुत्वा शक्तिसेना लज्जया शिरः अवनमय्य स्थितवती ।

लज्जया शिरः अवनमय्य स्थितवतीं शक्तिसेनां कीर्तिसिंहः अभिमानपूर्वकं दृष्टवान् । 'मम भाविनी पत्नी शक्तिसेना न केवलं सौन्दर्यवती, अपि तु अत्यन्तं सूक्ष्ममतिः चतुरा च' इति ज्ञातवान् कीर्तिसिंहः । शक्तिसेनायाः कीर्तिसिंहस्य च भाविदाम्पत्यं चिन्तयन्तौ सुषेणः जयसेनः च सन्तोषेण मन्दहासं प्रकटितवन्तौ ।



काम्बोजस्य नगदेशस्य चाक्यदेशस्य च अधिपतयः गूढचराणां द्वारा वार्तां ज्ञातवन्तः यत् - कीर्तिसिंहस्य बन्धनार्थं तैः प्रेषिताः सैनिकभटाः अरण्ये मरणं प्राप्तवन्तः इति, अपि च कीर्तिसिंहेन अपूर्वः हारः प्राप्तः अस्ति इति, ज्वालामुखीदेवी कीर्तिसिंहम् अनुगृहीतवती अस्ति इति, कोसले ज्वालामुखीदेव्याः आलयस्य निर्माणार्थं शक्तिसेना-कीर्तिसिंहयोः विवाहार्थं, कीर्तिसिंहस्य पट्टाभिषेकार्थं च सिद्धताः प्रचलन्त्यः सन्ति इति च ।

एताः सर्वाः वार्ताः श्रुत्वा नग-चाक्य-काम्बोजदेशानां राजानः कृतन्तं विफलं जातम् इति निराशाः ।

तेषु नागकर्णः किञ्चित्कालानन्तरम् उत्साहं प्राप्य अपरौ उभौ अपि सान्त्वयन् उक्तवान् - ''यत् प्रवृत्तं, तत् अस्माकं हिताय एव जातम् । कोसलदेशः उत्सवसमारम्भे यदा मग्नः भवति, तदा वयं त्रयः अपि ससैन्यं गत्वा हठात् कोसलस्य उपरि आक्रमणं करवाम'' इति ।

नागकर्णस्य एतत् वचनं सर्वे अङ्गीकृतवन्तः । युद्धसन्नाहः च आरब्धः ।

किन्तु कोसले वस्तुस्थितिः एषा असीत् यत् तत्र वस्तुतः याः सिद्धताः प्रचलन्त्यः आसन् ताः युद्धार्थम् एव । उत्सवसमारम्भः तु शत्रूणां सम्मुखीकरणार्थम् आयोजितः उपायः ।

तदा तदा परिस्थितिं परिशीलयन् कीर्तिसिंहः शत्रुसैनिकानां युद्धसन्नाहस्य समाप्तेः पूर्वम् एव युद्धसन्नद्धः जातः । युवराजस्थाने तिष्ठन् एव महाप्रमाणकस्य

सैन्यस्य नायकत्वं वहन् काम्बोजस्य उपरि आक्रमणं कृतवान् सः।

सैन्याध्यक्षस्य रणमल्लस्य नायकत्वे सैन्यस्य कश्चन भागः उत्तरभागस्थस्य नगदेशस्य उपरि आक्रमणम् अकरोत्।

सुशिक्षिताः कोसलसैनिकाः महान्तं श्रमं विना एव काम्बोजदेशं नगदेशं च स्वायत्तीकृतवन्तः । अनन्तरं कीर्तिसिंहः नाक्यदेशस्य उपरि आक्रमणं कृत्वा राज्ञः कुण्डिनवर्मणः बन्धनं कृतवान्।

कोसलविषये कुतन्त्राचरणार्थम् अन्ये च ये देशाः साहाय्यं कृतवन्तः, तेषाम् उपरि अपि आक्रमणं कृत्वा कीर्तिसिंहः तान् देशान् अपि स्वाधीनान् कृतवान्।

एतस्मात् भीताः अन्ये केचन राजानः कीर्तिसिंहं शरणं गताः। ते तं प्रार्थितवन्तः - ''कृपया अस्मान् रक्षतु। वयं भवतः अधीनाः एव भवामः'' इति।

कीर्तिसिंहः युद्धं समाप्य विजयोत्साहेन कोसलं प्रतिगतवान् । तावता देव्याः ज्वालामुख्याः आलयनिर्माणं समाप्तप्रायम् आसीत्।

विजयोत्साहेन सहैव कीर्तिसिंहस्य विवाहसिद्धता आरब्धा कोसले।

महता वैभवेन शक्तिसेना-कीर्तिसिंहयोः विवाहः सम्पन्नः । कीर्तिसिंहस्य मातापितरौ, शक्तिसेनायाः मातापितरौ, गुरुः कृष्णचन्द्रः च शक्तिसेनां कीर्तिसिंहं च आशिषा अनुगृहीतवन्तः। सर्वाः अपि प्रजाः अतीव सन्तुष्टाः।

चैत्रमासः सम्प्राप्तः । ज्वालामुखीदेव्याः आलयः सिद्धः जातः । देव्याः विग्रहः अरण्यतः आनीतः।

चैत्रशुद्धदशम्यां शुक्रवासरे शक्तिसेना कीर्तिसिंहः च नूतनतया निर्मिते आलये ज्वालामुखीदेवीं प्रतिष्ठापितवन्तौ।

पूर्वजानां कालतः निरीक्षितम् इदं शुभदिनं द्रष्टुं शक्ताः इति सुषेणः, वैष्णवीदेवी, जयसेनः, तस्य पत्नी च अतीव सन्तुष्टाः। ते अभिमानपूर्वकं पुत्रौ आशिषा अनुगृहीतवन्तः।

(समाप्तम्)





# अपूर्वः स्वर्णखड्गः

छलवादी त्रिविक्रमः यथापूर्वं वृक्षस्य समीपं गतवान् । वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! मध्यरात्रसमये अस्मिन् श्मशाने विषसर्पपिशाचादयः क्षुद्रजीविनः एव सञ्चरन्ति, न तु मानवाः । किन्तु भवान् अतीव परिश्रमं वहन् अस्ति इति यत्, तत् अतीव खेदं जनयति मम । किमर्थं भवान् अत्र अटन् कष्टम् अनुभवति ? अपूर्वा काचित् शक्तिः साधनीया अस्ति वा भवता ? अपूर्वशक्तिः साधिता चेदपि कदाचित् तस्याः सदुपयोगः न भवेत् इति भवन्तं स्मारयितुं महाराजस्य राजसिंहस्य कथां श्रावयामि, यश्च अपूर्वस्वर्णखड्गवान् सन् अपि आत्मना इष्टां राजकुमारीं परिणेतुं न शक्तः । श्रद्धया कथां शृणोतु, येन भवतः मार्गायासः परिहृतः स्यात्'' इति ।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं महाराजः राजसिंहः चन्दनपुरं पालयति स्म। मणिमेखलं सौगन्धिकापुरं च चन्दनपुरस्य प्रतिवेशिराज्ये। समृद्धियुक्तस्य चन्दनपुरस्य आक्रमणार्थं मणिमेखलस्य सौगन्धिकापुरस्य च राजानौ समयं प्रतीक्षमाणौ आस्ताम्।

वर्षद्वयं यावत् वृष्टिः नासीत् इति कारणतः कदाचित् चन्दनपुरं क्षामपीडितम् अभवत्। तादृशदारुणस्थितौ समग्रं सैन्यं पोषयितुम् अशक्तः राजसिंहः बहून् सैनिकान् उद्योगस्थानात् च्यावितवान्। एतस्मात् कारणात् चन्दनपुरं सैन्यबलहीनं जातम्।

केषुचित् एव दिनेषु गुप्तचराणां द्वारा राज्ञा राजसिंहेन वार्ता ज्ञाता यत् - प्रतिवेशिराज्यद्वयम् अपि सैन्यबलहीनस्य चन्दनपुरस्य उपरि आक्रमणार्थं सन्नद्धम् अस्ति इति।

शत्रूणाम् आक्रमणवार्तां श्रुत्वा राजा राजसिंहः अतीव चिन्तामग्नः अभवत्।

राजसिंहः कदाचित् रात्रिसमये आस्थानदैवज्ञं चिन्मयानन्दस्वामिनं द्रष्टुकामः तं स्वकीयं रहस्यमन्दिरं प्रति आहूतवान्। चिन्मयानन्दस्वामी राजसिंहस्य पितामहस्य कालादारभ्य अपि आस्थाने कार्यं करोति। इदानीं सः वयोवृद्धः जातः अस्ति। राजा राजसिंहः चिन्मयानन्दम् उद्दिश्य - ''स्वामिन्! अस्माकं राज्यस्य इदानीन्तनपरिस्थितिं भवान् जानाति एव। तन्मध्ये इदानीं गुप्तचराणां द्वारा वार्ता ज्ञाता अस्ति यत् - शत्रवः अस्माकं राज्यस्य उपरि आक्रमणार्थं सन्नद्धाः सन्ति इति। इदानीम् अस्माकं सैन्यबलम् अधिकं नास्ति इत्यतः वयं युद्धे निश्चयेन पराजिताः भविष्यामः। अतः इदानीं किं करणीयम्? एतस्य परिहारः कः? कृपया वदतु'' इति सखेदम् उक्तवान्।

महाराजस्य वचनं श्रुत्वा चिन्मयानन्दः किञ्चित्कालं ध्यानासक्तः सन् उक्तवान् - ''वत्स! शत्रुभिः सह युद्धं तु अस्माभिः अवश्यं करणीयम् एव। भवान् भीतः मा भवतु। विजयः अस्माकम् एव। भवान् पूजामन्दिरं गत्वा कालीदेव्याः पीठम् अपसारयतु। तस्य अन्तः स्वर्णखड्गः अस्ति।

तं स्वर्णखड्गं यः हस्तेन गृह्णाति, सः बलशालिनम् अपि शत्रुं लीलया जयति । किन्तु जयः तदा एव प्राप्यते, यदा स्वर्णखड्गधारी न्यायानुसारम् एव युद्धं करोति । यदि स्वर्णखड्गधारी अधर्मम् आचरति, तदा स्वर्णखड्गः काष्ठखड्गरूपेण परिणमति" इति ।



महाराजः राजसिंहः चिन्मयानन्दस्य वचनं श्रुत्वा आश्चर्यचकितः । अनन्तरं सः पूजामन्दिरं गत्वा देवीं नमस्कृतवान् । अनन्तरं च देव्याः पीठम् अपसारितवान् । पीठस्य अन्तर्भागः पेटिकाकारकः आसीत् । तस्य अन्तः स्वर्णखड्गः आसीत् । स्वर्णखड्गस्य त्सरुः माणिक्यरत्नमणिभिः अलङ्कृतः सन् सुन्दरतया शोभते स्म ।

राजसिंहः स्वर्णखड्गं हस्तेन गृहीतवान् । अपरक्षणे एव तस्मिन् काचित् अपूर्वा शक्तिः प्रविष्टा इव ।

सप्ताहः अतीतः । मणिमेखलस्य सौगन्धिकापुरस्य च राजानौ ससैन्यं चन्दनपुरस्य उपरि आक्रमणार्थम् आगतवन्तौ ।

राजसिंहः स्वकीयेन अल्पसैन्येन सह एव स्वर्णखड्गधारी सन् शत्रून् सम्मुखीकृतवान् । अनेके राजसिंहाः युद्धरङ्गे सन्ति इव भासते स्म । कासुचित् एव घण्टासु शत्रुसैन्यं पराजितं सत् पलायितम् ।

मणिमेखलस्य सौगन्धिकापुरस्य च राजानौ राजसिंहेन सह सन्धिं कृतवन्तौ यत् – आवां सामन्तराजत्वेन स्थित्वा प्रतिवर्षं यावत् देयं तावत् दद्वः इति ।

स्वर्णखड्गस्य प्रभावः सर्वैः ज्ञातः ।

केचन मासाः अतीताः । राजा राजसिंहः कदाचित् मृगयार्थम् अरण्यं गतवान् । आसायं मृगयां कृत्वा सः सूर्यास्तसमये राजधानीं प्रतिगन्तुम् उद्युक्तः । तावता कुतश्चित् 'रक्षन्तु रक्षन्तु' इति आर्तस्वरः श्रुतः राजसिंहेन ।

राजसिंहः आर्तस्वरम् अनुसरन् तस्यां दिशि गतवान् । तत्र कस्यचित् वृक्षस्य अधः शिबिका काचित् आसीत् । शिबिकायाः पुरतः काचित् सुन्दरी युवतिः आसीत् । तां युवतिं परितः चतस्रः युवतयः भयात् कम्पमानाः आसन् ।

ताः युवतयः तत्र आगतं राजसिंहं दृष्ट्वा



किञ्चिदिव धैर्यं प्राप्य अनतिदूरे एव कैश्चित् राजभटैः सह युद्धं कुर्वन्तं कञ्चित् युवकं प्रदर्शयन्त्यः उक्तवत्यः – "महावीर ! एषः दुष्टः अस्माकं युवराज्ञीम् अपहर्तुं प्रयतमानः अस्ति" इति।

तावति काले युवकस्य ताडनं सोढुम् अशक्ताः राजभटाः पलायनं कृतवन्तः। तदा राजसिंहः कोषतः स्वर्णखड्गं निष्कास्य तं युवकं सम्मुखीकृतवान्। क्षणाभ्यन्तरे एव युवकस्य हस्ततः खड्गः पतितः। युवकः पराजितः अभवत्।

अनुक्षणं राजसिंहः स्वखड्गं युवकस्य उरसि स्थापयित्वा कठोरस्वरेण पृष्टवान् – "कः भवान् ? किमर्थम् एतां राजकुमारीम् अपहर्तुम् इच्छति भवान् ?" इति।

तदा युवकः सविनयम् उक्तवान् – "भवान् कः इति न जानामि अहम्। किन्तु महावीरः भवान् इति तु सत्यम्। मम नाम कल्याणवर्मा। अहं वसन्तनगरस्य युवराजः अस्मि। सौगन्धिकापुरस्य युवराज्ञीम् एतां विजयेश्वरीम् अहम् दृष्टवान्। एतस्याम् अहं नितराम् अनुरागवान् अस्मि। एषा एव परिणेतव्या इत्यपि मम इच्छा। किन्तु 'विजयेश्वरी चन्दनपुरस्य महाराजं राजसिंहम् इच्छति। तस्मिन् एषा अनुरागवती अस्ति' इति ज्ञातवान् अहम्। एतस्मात् खिन्नः अहं कथमपि एषा विजयेश्वरी वशीकरणीया एव इति विचिन्त्य वनविहारार्थम् आगताम् एताम् अपहृत्य राक्षसपद्धत्या परिणेतुम् इष्टवान्। किन्तु भवतः आगमनकारणतः मम प्रयत्नः विफलः जातः" इति।

एतत् श्रुत्वा राजसिंहः कल्याणवर्माणम् उद्दिश्य – "स्त्रियः मनसः विरुद्धं बलात् विवाहकरणं सर्वथा उचितं न। इतःपरं कदापि एतादृशम् अकार्यं मा करोतु" इति उपदिशन् स्वर्णखड्गं कोषे स्थापितवान्।

तावत्पर्यन्तम् अपि कल्याणवर्मा सूक्ष्मं स्वर्णखड्गं परिशीलयन् आसीत्। अनन्तरं सः उक्तवान् – "भवान् चन्दनपुरस्य महाराजः राजसिंहः इति चिन्तयामि अहम्" इति।

राजसिंहः राजकुमारीं विजयेश्वरीं पश्यन् उक्तवान् – "आम्। अहं राजसिंहः" इति।

एतत् श्रुत्वा विजयेश्वरी लज्जया शिरः

अवनमय्य पार्श्वस्थां सखीम् उक्तवती - "आगामिन्यां पञ्चम्यां तिथौ मम पिता स्वयंवरं व्यवस्थापितवान् अस्ति । स्वयंवरे खड्गयुद्धस्य स्पर्धा भविष्यति । तस्मिन् स्वयंवरे अवश्यं भागः ग्रहीतव्यः इति राजकुमारी विजयेश्वरी सस्नेहम् आमन्त्रणं करोति इति भवती राजसिंहं वदतु" इति ।

सखी एतं विषयं राजसिंहं निवेदितवती । एतत् श्रुत्वा राजा राजसिंहः - "स्वयंवरार्थम् अवश्यम् आगमिष्यामि" इति उक्त्वा राजधानीं गतवान् ।

पञ्चम्यां तिथौ राजा राजसिंहः प्रभाते एव आत्मानं सम्यक् अलङ्कृत्य स्वयंवरार्थं प्रस्थितः । तदा महाराज्ञी प्रियंवदा महता दुःखेन अश्रूणि स्रावयन्ती - "प्रभो ! अग्निसाक्षितया विवाहिता पत्नी अहम् अस्मि । एवं सति भवान् अन्यां परिणेतुम् इच्छति खलु ! एतत् उचितं वा ?" इति पृष्टवती ।

तदा राजसिंहः उक्तवान् - "राजकुमारी विजयेश्वरी जगन्मोहिनी, अपूर्वसौन्दर्यवती च । अन्यत्र क्षत्रियाणां द्वितीयविवाहः धर्मसम्मतः एव अस्ति" इति ।

अनन्तरं राजसिंहः सौगन्धिकापुरं गत्वा स्वयंवरमण्डपं प्रविष्टवान् । कोषतः स्वर्णखड्गं निष्कास्य तत्र उपस्थितान् राजकुमारान् उद्दिश्य गाम्भीर्येण उक्तवान् - "यः खड्गविद्यां जानाति, सः पुरतः आगत्य मया सह खड्गयुद्धं करोतु" इति ।

राजसिंहस्य एतत् वचनं श्रुत्वा स्वयंवरमण्डपे उपविष्टाः राजकुमाराः अस्पष्टं किमपि सम्भाषणम् आरब्धवन्तः ।





इदानीम् आगतः कः इति, तेन कोषतः निष्कासितस्य स्वर्णखड्गस्य महात्म्यं कियत् इति च सर्वे जानन्ति स्म इति कारणतः कोऽपि खड्गयुद्धार्थं धैर्येण अग्रे न गतः।

तावता एकस्मिन् कोणे उपविष्टः कल्याणवर्मा उत्थाय - "अहं स्पर्धार्थं सिद्धः अस्मि" इति वदन् स्वकोषतः खड्गम् आकृष्य अग्रे आगतवान्।

कल्याणवर्मणः परिचयं प्राप्य राजसिंहः तिरस्कारेण तं पृष्टवान् - "भवान् मया सह युद्धं करोति वा ? तस्मिन् दिने अरण्ये प्रवृत्तं पराजयं भवान् विस्मृतवान् वा ?" इति।

कल्याणवर्मा तदा किमपि वक्तुम् अनिच्छन् मौनम् आश्रितवान्।

अनन्तरम् उभौ अपि खड्गयुद्धम् आरब्धवन्तौ। राजसिंहस्य हस्ते विद्यमानः स्वर्णखड्गः कल्याणवर्मणः खड्गस्य स्पर्शं यदा अकरोत्, अनुक्षणं सः काष्ठखड्गरूपेण परिणतः अभवत्।

एतस्मात् राजसिंहः दिग्भ्रान्तः। कल्याणवर्मा युद्धे जयं प्राप्तवान् इत्यतः राजकुमाराः सर्वे सन्तोषेण करताडनं कृतवन्तः। तदा राजकुमारी विजयेश्वरी कल्याणवर्मणः कण्ठे पुष्पमालाम् अर्पितवती। आश्चर्यं नाम राजसिंहस्य काष्ठखड्गः पुनरपि स्वर्णखड्गः जातः।

वेतालः एवं कथां समाप्य अवदत् - "राजन्! राजसिंहः पूर्वं स्वर्णखड्गसाहाय्येन बलशालिनौ अपि राजानौ सुलभतया जितवान्। अरण्ये कल्याणवर्माणं क्षणाभ्यन्तरे एव पराजितं कृतवान्। आस्थानदैवज्ञेन चिन्मयानन्देन उक्तम् - अधर्मम् आचरति चेत् एव खलु स्वर्णखड्गः काष्ठखड्गरूपेण परिणमति इति ? एवं सति स्वस्मिन् अनुरागवतीं राजकुमारीं परिणेतुम् इच्छन् राजसिंहः कल्याणवर्मणा सह खड्गयुद्धं कृतवान् इति यत्, तत् अधर्मयुद्धं कथं भवति ? अन्यच्च राजसिंहे अत्यन्तम् अनुरागवती विजयेश्वरी पूर्वतनं सर्वं विस्मृतवती इव व्यवहरन्ती कल्याणवर्मणः कण्ठे हारस्थापनपूर्वकं तं पतिं भावितवती। एतत् तु महाश्चर्यकरं खलु! न केवलं तावत्, युद्धसमाप्त्यनुक्षणम् एव काष्ठखड्गः स्वर्णखड्गरूपेण परिणतः। एतस्य गूढार्थः कः स्यात् ? एतेषां सन्देहानां समाधानं जानन्

अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''न्यायरीत्या व्यवहारकरणेन एव स्वर्णखड्गद्वारा जयः सिद्ध्यति, अन्यथा न इति चिन्मयानन्देन यत् उक्तम्, तस्मिन् विषये कोऽपि सन्देहः नास्ति। क्षामपीडितस्य राज्यस्य उपरि आक्रमणकरणं न क्षत्रियधर्मः, अपि तु अमानुषं कृत्यम्। तस्मात् कारणात् एव शत्रुभिः सह कृते युद्धे राजसिंहः सैन्यबलवान् न चेदपि स्वर्णखड्गद्वारा जयं प्राप्तवान्। कल्याणवर्मा राजकुमारीं विजयेश्वरीं मनसा इच्छन् ताम् अपहर्तुं प्रयत्नं कृतवान्। तस्मिन् समये कल्याणवर्मा धर्मं न आचरितवान् इति कारणात् स्वर्णखड्गधारी राजसिंहः विजयी जातः। तावत्पर्यन्तम् अपि राजसिंहः न्यायानुसारम् एव स्वर्णखड्गस्य उपयोगं कृतवान्। किन्तु अन्तिमक्षणे राजा राजसिंहः अधर्मम् आचरितवान्। महाराज्ञी अस्ति चेदपि द्वितीयविवाहः क्षत्रियाणां यद्यपि निषिद्धः न, तथापि धर्मसम्मतः इति वक्तुं न शक्यते। यतः द्वितीयविवाहकरणेन प्रथमपत्न्याः विषये द्रोहः आचरितः भवति। अतः एव कल्याणवर्मणा सह युद्धकरणसमये राजसिंहस्य स्वर्णखड्गः काष्ठखड्गत्वेन परिणतः सन् राजसिंहस्य विवेकोदयस्य कारणीभूतः जातः। अपि च स्वयंवरस्य नियमानुसारं खड्गयुद्धे यः विजयी भविष्यति, सः एव राजकुमार्या परिणेतव्यः। अस्मिन् विषये राजकुमार्याः इच्छायाः अनिच्छायाः वा प्रसक्तिः एव नास्ति। यदा विजयेश्वरी कल्याणवर्मणः कण्ठे मालां स्थापितवती, तदा एव राजसिंहः विजयेश्वरीं पत्नीत्वेन स्वीकरणावकाशात् शाश्वतं वञ्चितः जातः। अतः एव काष्ठखड्गः स्वर्णखड्गरूपेण परिणतः अभवत्'' इति।

एवं वदता त्रिविक्रमेण यदा मौनभङ्गः कृतः, तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# भाटकगृहस्य अन्वेषणम्

हेमपुरनामके नगरे नन्दीशनामकः कश्चित् भाटकगृहे निवसति स्म । तद्गृहस्य स्वामिनः पुत्र्याः विवाहः निश्चितः इति कारणतः गृहस्वामी नन्दीशम् उक्तवान् - ''भवान् गृहं रिक्तीकृत्य अन्यत्र गच्छतु'' इति ।

नन्दीशस्य चत्वारः पुत्राः सन्ति । सः भाटकगृहार्थं सर्वत्र अटन् बहुधा प्रयत्नं कृतवान् । किन्तु भाटकगृहस्य स्वामिनः निर्दाक्षिण्यं नन्दीशं वदन्ति स्म यत् - बहुपुत्रवते भाटकार्थं गृहं न दीयते इति । भाटकगृहे निवासं कुर्वद्भ्यः बालेभ्यः क्लेशः भवेत् इति गृहस्वामिनां चिन्ता आसीत् ।

एतस्मात् कारणात् नन्दीशः गृहस्वामिनं स्वपरिस्थितिं निवेदयन् बहुधा प्रार्थितवान् । तथापि गृहस्वामी नन्दीशस्य वचनं न अङ्गीकृतवान्, अपि तु गृहं त्यजतु इति आग्रहं कृतवान् ।

एतत् सर्वं परिशीलयन् नन्दीशस्य नववर्षीयः द्वितीयपुत्रः पार्श्ववीथ्यां रिक्तं किञ्चन भाटकगृहं गत्वा तद्गृहस्वामिनं पृष्टवान् - ''कृपया भाटकार्थं गृहं ददातु'' इति ।

तदा गृहस्वामी उक्तवान् - ''बहवः माम् उक्तवन्तः सन्ति - 'भाटकगृहम् आवश्यकम्' इति । किन्तु अहं तु बहुपुत्रवते गृहं भाटकार्थं न दास्यामि'' इति ।

तदा नन्दीशस्य पुत्रः उक्तवान् - ''स्वामिन् ! भाटकगृहं मह्यम् आवश्यकं, न तु मम पित्रे । मम तु पुत्राः न सन्ति । मम माता, पिता, अग्रजा, अग्रजः, अनुजा च सन्ति । अतः कृपया भाटकार्थं गृहं ददातु'' इति ।

बालस्य बुद्धिमत्तया चातुर्येण च अतीव सन्तुष्टः तद्गृहस्वामी भाटकार्थं गृहं दातुम् अनुक्षणम् अङ्गीकृतवान् । एवंप्रकारेण नन्दीशस्य भाटकगृहान्वेषणसमस्या सुलभतया परिहृता अभवत् ।



## चन्दमामानुबन्धः - ७१

### अस्मद्देशीया वृक्षसम्पत्

# पारिजातवृक्षः



पारिजातपुष्पस्य नाम्नः श्रवणमात्रेण एव काचित् कथा अस्माकं स्मृतिपथम् आयाति, यस्याः च कथायाः नाम पारिजातापहरणम् इति । एतस्याः कथायाः विषयः अस्ति - भगवान् श्रीकृष्णः पत्न्याः सत्यभामायाः इच्छां पूरयितुम् इच्छन् स्वर्गं गत्वा पारिजातवृक्षम् एव समूलम् उत्पाटितवान् इति, ततः तं च वृक्षं स्वीकृत्य गरुडवाहनारूढः सन् भूमिम् आगत्य पारिजातवृक्षम् आरोपितवान् इति च ।

पारिजातविषयिणी अन्या अपि काचित् कथा श्रूयते - पूर्वं पारिजातनामिका काचित् राजकुमारी सूर्यम् इष्टवती । सूर्ये नितराम् अनुरागयुक्ता राजकुमारी सा रात्रिसमये सूर्यस्य अदर्शनात् विरहतापम् अनुभवन्ती प्राणान् त्यक्तवती । तस्याः चिताभस्मनि उत्पन्नं सस्यम् एव पारिजातसस्यत्वेन ख्यातम् अभवत् । पारिजातपुष्पाणि सूर्यं द्रष्टुम् असमर्थाः । अतः एव तानि प्रातः सूर्योदयाभ्यन्तरे एव पतितानि भवन्ति । तस्मात् पारिजातवृक्षः 'विषादवृक्षः' इत्यपि आहूयते ।

वृक्षशास्त्रे एतत् ''निक्टान्थेस् आर्बार् ट्रिस्टिस्'' इत्युच्यते । एतस्य अर्थः 'विषादवृक्षः' इति । उत्तरभारते जनाः पारिजातपुष्पं 'रात्रिराज्ञी' नाम्ना व्यपदिशन्ति ।

पारिजातपुष्पम् अतीव सुगन्धयुतं भवति । एतस्य दलानि श्वेतवर्णीयानि, वृन्तानि च काषायवर्णीयानि भवन्ति । एतानि पुष्पाणि प्रातःकालाभ्यन्तरे एव वृक्षात् पतितानि भवन्ति ।

पारिजातवृक्षाः अस्माकं देशस्य सर्वप्रदेशेषु अपि सन्ति । पारिजातवृक्षः बहु उन्नतं न वर्धते, अपि तु गुल्मरूपेण वर्धते । एतस्य पर्णानि तीक्ष्णानि, परस्परम् अभिमुखानि च भवन्ति । पर्णानाम् उपरिभागः रूक्षः, अधोभागश्च मृदुः भवति । एतस्य पुष्पाणि गुच्छरूपेण भवन्ति ।




वर्धमानः महावीरः गौतमबुद्धस्य कालात् षट्शतवर्षेभ्यः पूर्वं वैशालीसमीपस्थे कस्मिंश्चित् राजवंशे जन्म प्राप्तवान् । महावीरं जिनं वदन्ति । 'जिनः' नाम इन्द्रियाणि जितवान् इत्यर्थः । जिनः बोधितवान् इति कारणतः 'जैनमतम्' इति नाम ख्यातम् अभवत् ।

महावीरः तस्य पूर्वजैः त्रयोविंशतितीर्थङ्करैः बोधितान् विषयान् क्रोडीकृत्य प्रजाः बोधितवान् । महावीरः चतुर्विंशतितमः तीर्थङ्करः । महावीरः द्वादश वर्षाणि यावत् ध्यानं कृत्वा 'कैवल्य'नामकम् उत्तमं ज्ञानं सम्पादितवान् ।

महावीरेण बोधिताः विषयाः अङ्ग-पूर्व-प्रकरणेत्यादिषु सङ्ग्रहग्रन्थेषु निरूपिताः सन्ति । विजय-विनयाभ्यां सङ्गृहीते 'लोकप्रकाश'नामके ग्रन्थे अपि जैनसिद्धान्ताः उल्लिखिताः वर्तन्ते ।

महावीरः कठोरं संन्यासजीवनम् आचरन् निर्मलानन्दप्राप्तिमार्गं जनान् बोधितवान् अस्ति । 'यस्यां स्थितौ जननमरणादिकम् एव न भवति, तस्यां स्थितौ निर्मलानन्दप्राप्तिः शक्यते । सम्यग्ज्ञानस्य, सम्यग्दर्शनस्य, सम्यक्चारित्र्यस्य च आचरणेन एव निर्मलानन्दप्राप्तिः शक्या' इति महावीरः बोधितवान् अस्ति ।

'कर्मणा पुनर्जन्मना तपसा च मोक्षप्राप्तिः' इति यः सिद्धान्तः अस्ति,

तद्विषये जैनमतस्य अन्यदर्शनानां च अभिप्रायभेदः नास्ति । जैनमते अहिंसायाः अपरिग्रहस्य अनेकान्तस्य च प्राधान्यम् अस्ति । तत्रापि अहिंसायाः प्रथमं स्थानम् । मानवैः हिंसानिवारणं स्वचिन्तनेन एव करणीयम् इति जैनमतस्य सिद्धान्तः । अपरिग्रहः नाम प्रापञ्चिकसुखभोगतः मुक्तिः प्राप्तव्या इति ।

प्रापञ्चिक - सुख - भोगानां त्यागार्थम् एव महावीरः वस्त्रधारणं परित्यक्तवान् । जैन-मतरश्या आहार-स्वीकरणम् अपि प्रापञ्चिकं बन्धनम् एव । तस्मात् बन्धनात् मुक्तिं प्राप्तुम् इच्छन्तः केचन जैनाः आहारम् अस्वीकुर्वन्तः एव इहलोकं त्यजन्ति ।

महावीरस्य निर्वाणानन्तरकालीनाः जैनाः दिगम्बराः श्वेताम्बराः इति च विभक्ताः ।

दिगम्बराः वस्त्राणि न धरन्ति । कठोरं नियमं च आचरन्ति । श्वेताम्बराः तावत् श्वेतवर्णीयानि वस्त्राणि धरन्ति ।



# भवन्तः जानन्ति वा ?

१. 'सरोवराणां नगरम्' इति प्रसिद्धिं गतं भारतीयं नगरं किम् ?
२. सः सुप्रसिद्धः आङ्ग्लकविः कः, यश्च लेखनसमये स्वस्कन्धे पालितं मार्जारम् उपवेशयति स्म ?
३. अरेबियन्‌समुद्र-बङ्गालखातयोः मध्ये स्थिते जलसन्धौ कश्चन द्वीपः अस्ति । तस्य जलसन्धेः नाम किम् ?
४. तस्य आङ्ग्लकवेः नाम किं, यश्च स्वप्रयाणसमये आत्मना पालितान् प्राणिनः नयति स्म ?
५. अस्माकं देशे 'कम्पमानानि शिखराणि' कुत्र सन्ति ?
६. बहुभाषाप्रवीणः अद्भुतकथारचयिता, सुप्रसिद्धः कथाकारः कः ?
७. लुम्बिनीवनस्य अद्यतनं नाम किम्, यत्र बुद्धस्य जन्म अभवत् ?
८. 'पाकिस्थानम्' इति नाम केन कदा च निरूपितम् ?
९. प्राचीनतमः ईजिप्ट्‌ग्रन्थः कः ? सः ग्रन्थः कदातनः ?
१०. शर्करायाः उत्पादनम् अत्यधिकप्रमाणेन कस्मिन् देशे भवति ?
११. जगति का भाषा अत्यधिकसङ्ख्याकैः जनैः प्रयुज्यते ?
१२. प्राचीनमृत्युलेख-नूतनमृत्युलेख-सम्बद्धाः कति ग्रन्थाः सन्ति ?
१३. सः पाश्चात्यः यात्रिकः कः, यश्च क्रि. पू. चतुर्थे शतके अस्माकं देशम् आगत्य स्वकीयान् प्रवासानुभवान् लिखितवान् ?
१४. यदा अशोकमहाराजः स्वराजदूतं श्रीलङ्कां प्रेषितवान्, तदा श्रीलङ्कां कः पालयति स्म ?
१५. अङ्कगणित-बीजगणितसम्बन्धी प्राचीनग्रन्थः भारतीयेन केन लिखितः ? तस्य ग्रन्थस्य नाम किम् ?

## उत्तराणि

१. उदयपुरम् ।
२. एड्गर् अलेन् पो ।
३. रामेश्वरम् । मन्नार्-जलसन्धिः ।
४. टाई बैरन् ।
५. अहमदाबाद्‌नगरे ।
६. जाकोब् ग्रिम् ।
७. रुम्मिन् देइ (नेपालम्) ।
८. चौधरी रहमत अलीवर्येण, १९३३ तमे वर्षे ।
९. मृतानां ग्रन्थः ।
क्रि.पू. ३,२०० तमवर्षस्य ।
१०. भारतदेशे ।
११. चीनीभाषा ।
१२. ३९ : २७ ।
१३. मेगस्तनीस् ।
१४. देवानां प्रियः तिस्सा ।
१५. भास्कराचार्येण । लीलावती ।




# सरस्वत्याः बुद्धिमत्ता

स्वबुद्धिमत्ताविषये श्रीपतेः महान् आत्मविश्वासः । कदाचित् श्रीपतेः मातुलः तस्य गृहम् आगत्य श्रीपतिम् उक्तवान् - "सुवर्णकमलपर्णस्य रसं ललाटे लेपयित्वा कश्चन मन्त्रः उच्यते चेत् भूमौ विद्यमानाः निधयः दृष्टिगोचराः भवन्ति इति श्रूयते । तं मन्त्रं जानाति वा भवान् ?" इति ।

एतत् श्रुत्वा श्रीपतिः उच्चैः हसन् पृष्टवान् - "मातुल ! किमिदम् ? भवान् अपि एतादृशेषु विषयेषु विश्वसिति वा ?" इति ।

तदा श्रीपतेः मातुलः उक्तवान् - "न । ममापि विचारः यत् एतादृशेषु विषयेषु न विश्वसनीयम् इत्येव । किन्तु मम पुत्री एतादृशेषु विषयेषु विश्वसिति । तेषां विषयाणां प्रचारं करोति अपि" इति ।

श्रीपतेः मातुलस्य पुत्र्याः नाम सरस्वती । सरस्वती सुन्दरी । सरस्वत्याः पिता चिन्तयति स्म यत् - सरस्वतीं श्रीपतये दत्त्वा विवाहं कारयामि इति । 'सरस्वती अतीव मुग्धा । बुद्धिमती अपि न । मया बुद्धिमती एव काचित् परिणेतव्या' इति श्रीपतिः चिन्तयति स्म । अतः सः सरस्वतीं परिणेतुं सर्वथा न इच्छति स्म ।

अतः श्रीपतिः मातुलम् उक्तवान् - "किं कर्तुं शक्यते । केचन मन्दमतयः अपि जन्म प्राप्नुवन्ति" इति ।

तदा श्रीपतेः मातुलः उक्तवान् - "सरस्वती मन्दमतिः इति कथनं सर्वथा न उचितम् । यतः यस्मिन् विषये सा विश्वसिति तत् न इति साधयितुं बुद्धिमता अपि केनापि न शक्यते" इति ।

एतत् श्रुत्वा श्रीपतिः मातुलस्य गृहं गत्वा सरस्वतीम् उक्तवान् - "भवती सर्वेषु विषयेषु अपि विश्वासं मा करोतु । यतः भवत्याः एतादृशव्यवहारं दृष्ट्वा सर्वे अपि

भवतीम् उपहसन्ति'' इति।

तदा सरस्वती उक्तवती - ''यत्र विश्वासः करणीयः, तत्र अवश्य विश्वासं करोमि एव अहम्'' इति।

''रामायणं महाभारतं च पठतु। तेन भवत्याः ज्ञानं वर्धते'' इति सरस्वतीं बोधितवान् श्रीपतिः।

किन्तु सरस्वती पूर्वम् एव रामायण-महाभारतादिकं पठित्वा तद्विषये महत् ज्ञानं सम्पादितवती अस्ति। एतत् ज्ञात्वा श्रीपतिः महाभारतादिविषये कांश्चन प्रश्नान् पृष्टवान्। सर्वेषाम् अपि तृप्तिकरम् उत्तरं दत्तवती सरस्वती।

अनन्तरं श्रीपतिः पुनरपि सरस्वतीम् उक्तवान् - ''केवलं पुराणानाम् ज्ञानेन न अलम्। जीवने गणितस्य आवश्यकता महती अस्ति। गणिताध्ययनेन एव बुद्धिः तीक्ष्णा भवति'' इति।

एतत् श्रुत्वा सरस्वती उक्तवती - ''अहं गणितशास्त्रे अपि निपुणा अस्मि'' इति।

एतेन आश्चर्यचकितः श्रीपतिः गणित-विषये बहून् प्रश्नान् पृष्टवान्। सर्वस्यापि योग्यम् उत्तरं दत्तवती सरस्वती।

अनन्तरं श्रीपतिः पुनः उक्तवान् - ''केवलम् अध्ययनेन किमपि प्रयोजनं नास्ति। यदि भवत्याः व्यवहारज्ञानं स्यात्, तर्हि अवास्तविके अपि विषये भवती विश्वासं न अकरिष्यत्'' इति।

एतत् श्रुत्वा सरस्वती आश्चर्येण पृष्टवती - ''तादृशे कस्मिन् विषये अहं विश्वसितवती ?'' इति।

तदा श्रीपतिः सरस्वत्याः पित्रा उक्त



सुवर्णकमलपर्णरसस्य सन्दर्भम् उक्तवान् ।

तदा सरस्वती मन्दहासपूर्वकं श्रीपतिम् उक्तवती – ''वस्तुतः सत्यम् एतत् । मम सखी राधा एतं विषयं माम् उक्तवती । सा तु कदापि असत्यं न वदति'' इति ।

''भवत्याः सखी राधा विनोदार्थं भवतीम् उक्तवती स्यात्'' इति उक्तवान् श्रीपतिः ।

तदा सरस्वती – ''राधा तु मम प्रियसखी । तस्याः पतिः ताम् एतं सुवर्णकमलपर्णरसविषयम् उक्तवान् अस्ति । पतिः पत्नीम् असत्यं वदति वा ?'' इति पृष्टवती ।

''सर्वे पतयः अपि पत्नीं सत्यम् एव वदन्ति इति कथं वक्तुं शक्यते ? भवादृशी पत्नी भवति चेत् पतिः असत्यम् एव वदेत् कदाचित्'' इति उक्तवान् श्रीपतिः ।

तदा सरस्वती उक्तवती – ''मया उक्तम् असत्यं न भोः, भवान् एव कदाचित् राधायाः पतिं पश्यतु । तेन सह वार्तालापकरणेन भवान् एतत् अवश्यम् अङ्गीकरोति एव'' इति ।

अनन्तरं कदाचित् श्रीपतिः राधायाः पत्या मिलितवान् । प्रवृत्तं सर्वं निवेदितवान् च ।

तदा राधायाः पतिः उक्तवान् – ''सुवर्णकमलपर्णविषये आहत्य अष्ट श्लोकाः सन्ति । ते श्लोकाः क्रमशः पठ्यन्ते चेत् एव फलं प्राप्यते । तत् कार्यं च महिलाभिः एव करणीयम् । राधा कदाचित् तान् श्लोकान् पठितवती । तस्य परिणामतः मूषकस्य बिलस्थं शतसुवर्णनाणकानां स्यूतं दृष्टवती सा । धनं प्राप्तम् इति उत्साहेन श्लोकपठनक्रम





विस्मृतवती अस्ति सा । अतः इदानीं पुनरपि श्लोकानां स्मरणार्थं प्रयतमानाः स्मः वयम् । किन्तु कदा वयं तत् साधयितुं शक्नुमः इति न ज्ञायते'' इति ।

''किमर्थं तथा वदति भवान् ? बहूनि दिनानि आवश्यकानि वा तत् प्राप्तुम् ?'' इति पृष्टवान् श्रीपतिः ।

तदा राधायाः पतिः उक्तवान् - ''आरम्भे अस्माभिः अपि चिन्तितम् आसीत् - एतत् अतीव सुलभम् इति । किन्तु अनन्तरं ज्ञातं यत् तत् न तावत् सुलभम् इति । भवतः मातुलस्य पुत्री सरस्वती उक्तवती - '४०३२० प्रकारैः ते पठितुं शक्यन्ते' इति । ते च श्लोकाः अमावास्यायाम् एव पठनीयाः । वर्षे केवलं द्वादश अमावास्याः भवन्ति खलु ? अतः सर्वविधप्रकारैः पठनार्थं २६८८ वर्षाणि आवश्यकानि । तन्मध्ये कदाचित् युक्तः प्रकारः अस्माभिः ज्ञायेत । अतः योग्यस्य श्लोकपठनप्रकारस्य प्राप्तिः तावत् सुलभा तु सर्वथा न'' इति ।

एतत् श्रुत्वा श्रीपतिः राधायाः पतिम् उक्तवान् - ''तान् श्लोकान् मां वदतु भवान् । प्रकाराः के इति अहम् एव अन्वेषणं करिष्यामि'' इति । तदा राधायाः पतिः ताडपत्रमेकम् आनीय श्रीपतये दत्तवान् ।

गृहम् आगतं श्रीपतिं दृष्ट्वा सरस्वती पृष्टवती - ''मन्त्रैः गोपुरीषं सुवर्णरूपेण परिवर्तयितुं शक्यते इति वार्ता श्रुतवती अहम् । भवान् जानाति वा एतत् ?'' इति ।

तदा श्रीपतिः पृष्टवान् - ''सः मन्त्रः कः इति जानाति वा भवती ?'' इति ।

श्रीपतेः वचनं श्रुत्वा सरस्वती आश्चर्येण - ''मन्त्रविषये किमर्थम् आसक्तिः भवतः ? भवान् तु तादृशविषये न विश्वसिति किल !'' इति उक्तवती ।

तदा श्रीपतिः उक्तवान् - ''कः जानाति ? प्रयोगं कृत्वा द्रष्टुं शक्नुमः खलु ! कदाचित् सत्यं स्यात् अपि'' इति ।

श्रीपतेः कुतूहलं ज्ञात्वा सरस्वती उक्तवती - ''यदि भवान् तं मन्त्रं ज्ञातुं कुतूहली अस्ति, तर्हि अहं ज्ञात्वा आगत्य भवन्तं वदिष्यामि'' इति ।

एतत् श्रुत्वा श्रीपतिः उत्साहेन सरस्वतीम् उक्तवान् - ''अस्तु तर्हि । अहं गोपुरीषं सुवर्णं करिष्यामि । भवती

भूमिस्थान् निधीन् ज्ञातुं श्लोकपठनप्रकारान् जानातु । आवयोः मध्ये यः शीघ्रं स्वकार्यं साधयिष्यति सः बुद्धिमान् इत्यर्थः'' इति ।

तदा सरस्वती शिरः चालयन्ती उक्तवती - ''एतादृशविषयेषु वृथा समययापनं बुद्धिहीनाः एव कुर्वन्ति'' इति ।

तदा श्रीपतिः आश्चर्येण पृष्टवान् - ''भवती अपि एतादृशेषु विषयेषु विश्वसिति एव खलु !'' इति ।

तदा सरस्वती उक्तवती - ''एतादृशविषयेषु विश्वासकरणेन मम कापि हानिः नास्ति । अतः विश्वसिमि । आचरणेन महती हानिः भविष्यति । अतः न आचरामि । अद्यपर्यन्तं बहवः मां बहून् विषयान् उक्तवन्तः सन्ति । अहं तेषु विषयेषु विश्वसितवती अपि । सर्वेषु विषयेषु अहं विश्वसिमि इति कारणतः सर्वे माम् एव वदन्ति । किन्तु अहं तादृशेषु अन्धविश्वासेषु विश्वासं कृत्वा अपि मौनं तिष्ठामि'' इति ।

एतत् श्रुत्वा श्रीपतिः ज्ञातवान् यत् - मम अपेक्षया अपि सरस्वती एव बुद्धिमती इति । सः सरस्वतीम् उद्दिश्य - ''भवत्याः अपेक्षया अपि अहम् एव बुद्धिमान् इति चिन्तयन् अहं राधायाः पत्युः वचनेषु विश्वस्य तान् श्लोकान् ज्ञातुम् इष्टवान् आसम् । तेन मम अत्यमूल्यः समयः व्यर्थः अभविष्यत् । इदानीम् अहं ज्ञातवान् यत् - भवती एव मदपेक्षया बुद्धिमती इति । अहं भवतीं परिणेतुम् इच्छामि । भवत्याः सहमतिः अस्ति वा अस्मिन् विषये ?'' इति पृष्टवान् ।

तदा सरस्वती मन्दहासपूर्वकम् उक्तवती - ''इदानीम् अहं भवतः वचने विश्वासं करोमि । तेन सिद्ध्यति यत् भवान् बुद्धिमान् न इति मया अङ्गीकृतम् इति । तथापि भवतः परिणयेन मम हानिः तु कापि नास्ति । अतः अहं भवतः परिणयम् अङ्गीकरोमि'' इति ।

स्वपुत्र्याः सरस्वत्याः बुद्धिमत्तां निरूपयितुम् एव मातुलः एतादृशीं परीक्षाम् आयोजितवान् आसीत् इति ज्ञातवान् श्रीपतिः । तथापि 'बुद्धिमती पत्नी प्राप्ता' इति श्रीपतिः अतीव सन्तुष्टः ।





# शकुनफलम्

पूर्वं चन्द्रगिरिनामकं राज्यं राजा चन्द्रकान्तः पालयति स्म । मृगया तस्य प्रियतमं कार्यम् । न्यूनातिन्यूनं मासे एकवारं वा अरण्यं गत्वा मृगया करणीया इति चन्द्रकान्तस्य इच्छा । कदाचित् कार्यभारवशात् चन्द्रकान्तः बहुकालं यावत् मृगयार्थं गन्तुं न शक्तवान् ।

केचन मासाः अतीताः । राजा चन्द्रकान्तः सर्वाणि राजकार्याणि समाप्य कदाचित् सपरिवारं शुभे मुहूर्ते मृगयार्थं प्रस्थितः । तस्य प्रस्थानसमये मध्येमार्गं परशुं स्कन्धे धृतवान् कर्मकरः कश्चित् चन्द्रकान्तस्य अभिमुखम् आगतवान् ।

कर्मकरस्य दर्शनेन कुपितः राजा चन्द्रकान्तः तम् उद्दिश्य – "रे, अविवेकिन् ! बहुकालानन्तरम् अद्य मृगयार्थं प्रस्तितः अस्मि अहम् । किन्तु अपशकुनरूपेण भवान् पुरतः आगतवान् । भवतः मुखदर्शनकारणतः मम अद्यतनकार्यं यदि निष्फलं भविष्यति, तर्हि अहं भवन्तं सम्यक् दण्डयिष्यामि" इति उक्त्वा ततः अरण्यं गतवान् ।

तस्य कर्मकरस्य नाम गोविन्दः । 'दौर्भाग्यवशात् अद्य महाराजस्य अभिमुखम् आगतवान् अहम्' इति चिन्तयन् गोविन्दः आत्मानं पुनः पुनः निन्दितवान् । अपि च सः मनसा एव देवं प्रार्थितवान् यत् – महाराजस्य अद्यतनमृगया निर्विघ्नं प्रचलतु इति ।

तस्मिन् दिने महाराजस्य मृगयाकार्यक्रमः सफलः जातः । सः एकं सिंहं, चतुरः व्याघ्रान्, कांश्चन वन्यसूकरान् च विनायासं मारितवान् । अद्यतनकार्यं सफलं जातम् इति यत्, तस्य कारणं तु कर्मकरस्य मुखदर्शनम् एव इति चिन्तयन् राजा मृगयां समाप्य राजभवनं गतवान् ।

अनन्तरदिने राजा कर्मकरं गोविन्दं

सभाम् आहूय तम् उद्दिश्य - "ह्यः भवतः मुखदर्शनात् मम मृगयाकार्यक्रमः निर्विघ्नं समाप्तः । अपि च मम महान् लाभः अपि जातः । भवान् अपि काष्ठसङ्ग्रहणार्थम् अरण्यं गतवान् खलु ! भवतः अनुभवः कः ? वदतु तावत्" इति उक्तवान् ।

तदा गोविन्दः महतीं भ्रान्तिम् अनुभवन् महाराजं नमस्कृत्य उक्तवान् - "प्रभो ! भवतः मुखदर्शनेन मया अपि ह्यः महान् लाभः प्राप्तः । विनायासम् अहं महावृक्षान् अपि च्छेदयितुं शक्तवान् । काष्ठविक्रयणेन द्विगुणितः लाभः प्राप्तः मया । अतः भवन्तं स्मरन्तः मम कुटुम्बसदस्याः सर्वे अपि ह्यः सन्तोषेण आकण्ठं भोजनं कृतवन्तः" इति ।

एतत् श्रुत्वा अतीव सन्तुष्टः राजा किमपि वक्तुम् उद्युक्तः । तावता तत्रैव सभायाम् उपविष्टः राजवैद्यः उत्थाय उक्तवान् - "महाराज ! एषः असत्यं वदन् अस्ति । ह्यः एषः अरण्ये प्राणापायस्थितौ पतितः आसीत् । अकस्मात् तत्र गतः अहं चिकित्सां कृत्वा एतम् उज्जीवितवान्" इति ।

एतस्मात् कुपितः राजा उक्तवान् - "रे ! गोविन्द ! कियत् धाष्टर्यं भवतः ? माम् एव असत्यं कथयति खलु ! वस्तुतः यत् प्रवृत्तं, तत् वदतु । नो चेत् भवतः मरणदण्डनं कारयिष्यामि" इति ।

महाराजस्य कोपात् भीतः गोविन्दः कम्पमानः एव उक्तवान् - "महाराज ! अरण्यगमनसमये मम मुखदर्शनात् कुपितः भवान् मां निन्दितवान् । तदा एव मम मनः कलुषितम् अभवत् । 'भवतः कोपस्य कारणीभूतः जातः खलु अहम्' इति



चिन्तयन् एव अहम् अरण्यं गतवान् । कस्यचित् वृक्षस्य च्छेदने उद्युक्तः अहं किमपि चिन्तयन् वल्मीकस्य उपरि पादं स्थापितवान् । अपरक्षणे एव वल्मीकतः सर्पः बहिः आगत्य मां दष्टवान् । स्मृतिहीनः अहं तत्रैव पतितः । तावता औषधसस्यानि अन्विष्यन् तत्र आगतः एषः राजवैद्यः मां दृष्ट्वा चिकित्सां कृतवान् । मम शरीरतः विषं निष्कासितवान् च । सर्पदंशनात् निश्शक्तः अहं बहुसमयपर्यन्तं तत्रैव शयनं कृतवान् आसम् । अनन्तरं रात्रौ गृहं गतवान्'' इति ।

एतत् श्रुत्वा राजा खेदेन पृष्टवान् - ''मम मुखदर्शनात् भवतः हानिः एव जाता । तथापि भवान् किमर्थं माम् असत्यम् उक्तवान् ?'' इति ।

तदा गोविन्दः सविनयं महाराजं नमस्कुर्वन् उक्तवान् - ''कृपया अहं क्षन्तव्यः । भवतः मुखदर्शनात् मम हानिः जाता इति यदि अहम् अवदिष्यं, तर्हि भवतः विषये सभासदां दुरभिप्रायः उद्भूतः अभविष्यत् । भवतः गौरवं रक्षितुम् इच्छन् अहम् असत्यम् उक्तवान्'' इति ।

एतत् श्रुत्वा राजा - ''अरण्ये भवान् सर्पेण दष्टः इति इदानीं सर्वैः ज्ञातम् एव खलु ! एतेन मम गौरवं रक्षितम् अभवत् वा ?'' इति पृष्टवान् ।

तदा गोविन्दः उक्तवान् - ''कृपया मां क्षाम्यतु भवान् । यदि कदाचित् अहम् अस्वस्थः भवामि, तर्हि अपि औषधं कारयितुं मम सामर्थ्यं नास्ति । तादृशः दरिद्रः अहम् । एवं सति अरण्ये सर्पेण दष्टः अहं राजवैद्येन चिकित्सां प्राप्तवान् इति यत्, तत् भवतः मुखदर्शनस्य फलम् एव खलु ! एतं लघुविषयं शास्त्रविदः पुराणविदः सभासदः अवश्यम् अवगन्तुं शक्नुवन्ति'' इति ।

गोविन्दस्य वचनेन सन्तुष्टः राजा सभासदः च उच्चैः हसितवन्तः । गोविन्दस्य कथनशैल्याः तात्पर्यं, शकुनविषये तस्य अविश्वासं च ज्ञात्वा सन्तुष्टः राजा चन्द्रकान्तः शतं सुवर्णनाणकानि पारितोषिकरूपेण गोविन्दाय दत्तवान् । गोविन्दं स्वकर्मकरेषु अन्यतमत्वेन नियोजितवान् च ।





# महाभारतम्

दुष्यन्तस्य अनन्तरकाले भरतः राजा जातः । सः कण्वमहामुनिं पुरोहितत्वेन नियोज्य बहुकालं यावत् वैभवेन राज्यपालनं कृतवान् ।

भरतस्य प्रपौत्रः हस्तिनामकः । तस्य नाम्ना एव 'हस्तिनापुरम्' इति नाम प्रख्यातम् । हस्तिनः कालानन्तरं पञ्च परम्पराः समाप्ताः । अनन्तरं जातः कुरुः । तस्य नाम्नि एव कुरुक्षेत्रं प्रसिद्धिं गतम् । कुरोः कालानन्तरं सप्त परम्पराः समाप्ताः । अनन्तरकाले जातः प्रतीपः । शिबेः पुत्री सुनन्दा प्रतीपस्य पत्नी । प्रतीप-सुनन्दयोः देवापिः, शन्तनुः, बाह्लीकः चेति त्रयः पुत्राः जाताः । तेषु त्रिषु ज्येष्ठः पुत्रः तपः कर्तुम् अरण्यं गतवान् इति कारणतः अनुजः शन्तनुः राजा जातः ।

शन्तनुः कदाचित् अरण्ये बहुकालं यावत् मृगयां कृत्वा विश्रान्तिं स्वीकर्तुम् इच्छन् गङ्गातीरे उपविष्टवान् आसीत् । तस्मिन् समये काचित् सुन्दरी स्त्री तेन दृष्टा । अपूर्वकान्तिमतीं तां दृष्ट्वा शन्तनुः ऊहितवान् यत् - एषा काचित् देवतास्त्री इति । शन्तनुः तस्याः सौन्दर्येण आकृष्टः जातः । सा अपि आश्चर्येण शन्तनुं दृष्टवती ।

एतस्याः अपि मयि अनुरागः अस्ति इति चिन्तयन् शन्तनुः तस्याः समीपं गत्वा तां पृष्टवान् - "हे सुन्दरि ! भवती का ? एकाकिनी भवती किमर्थम् अत्र गङ्गातीरे अटन्ती अस्ति ?" इति ।

तदा सा स्वपरिचयं वक्तुम् अनिच्छन्ती शन्तनुम् उक्तवती - "यदि भवान् मां परिणेतुम् इच्छति, तत्र ममापि सहमतिः

## ४. भीष्मप्रतिज्ञा



अस्ति एव । किन्तु मम कश्चन नियमः अस्ति । आवयोः विवाहानन्तरं मया यानि कार्याणि क्रियन्ते, तेषां विघ्नः न करणीयः भवता । अपि च मम निन्दनम् अपि न करणीयम् । भवान् एतस्य नियमस्य उल्लङ्घनं करोति चेत् अहं भवन्तं त्यक्त्वा गमिष्यामि'' इति ।

शन्तनुः एतत् अङ्गीकृत्य तां पत्नीत्वेन परिगृहीतवान् । शन्तनोः सप्त पुत्राः जाताः । किन्तु यदा शिशुः जन्म प्राप्नोति स्म तदा तस्य पत्नी शिशुं गङ्गायां क्षिपति स्म । एतस्मात् शन्तनुः अतीव दुःखितः भवति स्म । 'यदि पत्नीं सन्मार्गं बोधयामि तर्हि सा मां त्यक्त्वा गच्छति' इति भयात् शन्तनुः पत्न्याः दुष्कृत्यं पश्यन् अपि मौनम् आश्रयति स्म ।

शन्तनोः पत्नी अष्टमवारं पुनः गर्भं धृतवती, पुत्रं प्रसूतवती च । तदा तं शिशुं पत्नीतः रक्षितुम् इच्छन् शन्तनुः कोपेन पत्नीम् उद्दिश्य - ''रे ! अविवेकिनि ! निष्करुणे ! किमर्थं पुत्रान् मारयति भवती ? या कापि माता पुत्रान् मारयितुम् इच्छति वा ? एतम् अष्टमपुत्रं वा मा मारयतु । वस्तुतः भवती का इति, किमर्थं निष्करुणया पुत्रान् मारयति इति च ज्ञातुम् इच्छामि अहम्'' इति उक्तवान् ।

तदा शन्तनोः पत्नी उक्तवती - ''यदि भवान् पुत्रम् इच्छति, तर्हि इदानीम् एतं न मारयामि । किन्तु भवान् मम कार्यस्य विघ्नम् आचरितवान् इति कारणतः अहं भवन्तं त्यक्त्वा इतः गमिष्यामि । तत्पूर्वं भवतः प्रश्नस्य समाधानम् उक्त्वा गमिष्यामि । अहं गङ्गा अस्मि । वसिष्ठमहर्षिः अष्ट वसून् शप्तवान् आसीत् यत् - भवन्तः मानवजन्म प्राप्नुवन्तु इति । ते अष्ट वसवः प्रार्थितवन्तः - 'गङ्गा शन्तनुः च अस्माकं मातापितरौ भवेताम्' इति । अहं तेषाम् अष्टवसूनाम् पुनर्जन्मनिमित्तं स्त्रीरूपेण अत्र आगतवती, भवन्तं परिणीतवती च । मम गर्भे जाताः अष्ट वसवः अपि शीघ्रातिशीघ्रं शापमुक्ताः भवन्तु इति कारणतः अहं शिशूनां जन्मसमनन्तरम् एव गङ्गायां क्षिपामि स्म । इदानीं भवतः आशयानुसारम् अष्टमम् एतं शिशुं न मारयिष्यामि'' इति ।

किन्तु अष्टमशिशुं शन्तनवे अदत्त्वा एव गङ्गा शिशुं स्वीकृत्य ततः अदृश्या जाता ।

पत्नीपुत्राणां विरहात् दुःखतमः शन्तनुः ततः हस्तिनापुरं प्रत्यागतवान् ।

कदाचित् शन्तनुः मृगयां कुर्वन् गङ्गातीरं गतवान् । अतीव लघुप्रवाहयुक्तां गङ्गां दृष्ट्वा आश्चर्यचकितः शन्तनुः कारणं किं स्यात् इति परिशीलितवान् । अनतिदूरे स्वबाणैः गङ्गायाः सेतुनिर्माणं कुर्वन्तं कञ्चित् युवकं दृष्टवान् शन्तनुः । तस्मिन् एव समये गङ्गा तत्र आगता । सा तं युवकं शन्तनवे दर्शयन्ती उक्तवती – "एषः एव भवतः अष्टमः पुत्रः, यम् अहं पूर्वं नीतवती आसम् । एतावन्ति वर्षाणि अहम् एतं पालितवती अस्मि । एषः वसिष्ठस्य सकाशात् वेदं वेदाङ्गानि च अधीतवान् अस्ति । परशुरामस्य सकाशात् धनुर्विद्याम् अभ्यस्तवान् अस्ति । एतस्य नाम देवव्रतः । इदानीं भवान् एतम् आत्मना सह नेतुम् अर्हति" इति ।

एतस्मात् सन्तुष्टः शन्तनुः देवव्रतं हस्तिनापुरं नीत्वा, तं युवराजपदव्यां नियुक्तवान् ।

चत्वारि वर्षाणि अतीतानि । शन्तनुः कदाचित् विहारार्थं यमुनानदीतीरं गतवान् । तत्र तेन अपूर्वः कश्चन सुगन्धः आघ्रातः । शन्तनुः तं सुगन्धम् अनुसृत्य गतवान् । तत्र काचित् सुन्दरी स्त्री शन्तनुना दृष्टा ।

शन्तनुः तां सुन्दरीं पृष्टवान् – "भवती का ? कस्य पुत्री ?" इति ।

तदा सा सुन्दरी उक्तवती – "मम नाम मत्स्यगन्धा । अहं दाशराजस्य पुत्री । 'योजनगन्धा'नाम्ना अपि माम् आह्वयन्ति । मम पितुः आदेशानुसारम् अहम् अत्र जनान्





नदीतीरं प्रापयितुं नौकाचालनकार्यं कुर्वती अस्मि'' इति।

अनन्तरं शन्तनुः मत्स्यगन्धां परिणेतुम् इच्छन् तस्याः पितुः दाशराजस्य समीपं गत्वा तम् उक्तवान् यत् - भवतः पुत्रीं परिणेतुम् इच्छामि अहम् इति।

शन्तनोः वचनेन अतीव सन्तुष्टः दाशराजः उक्तवान् - ''भवान् मम जामाता भविष्यति इत्यनेन तु मम महान् सन्तोषः। किन्तु एकः नियमः। मम पुत्र्यां यः पुत्रः जायते, सः एव अग्रे महाराजः भवेत्। यदि एतं नियमम् अङ्गीकर्तुं भवान् सिद्धः, तर्हि अवश्यं मम पुत्रीं भवते दास्यामि'' इति।

'इदानीम् एव देवव्रतः स्वराज्ये युवराजपदव्याम् अस्ति। एवं सति मत्स्यगन्धायाम् अग्रे जायमानस्य पुत्रस्य महाराजपदवीप्राप्तिः सर्वथा अशक्या एव' इति चिन्तयन् शन्तनुः दाशराजस्य वचनं न अङ्गीकृतवान्, अपि तु मौनं गृहं प्रतिगतवान्।

मत्स्यगन्धां परिणेतुं न शक्तः अहम् इति शन्तनुः महत् दुःखम् अनुभूतवान्।

देवव्रतः पितुः दुःखस्य कारणं पृष्टवान्। शन्तनुः दाशराजस्य पुत्र्याः परिणयविषये स्वमनःस्थितिं देवव्रतं निवेदितवान्।

पितुः वचनं श्रुत्वा देवव्रतः सपरिवारं दाशराजसमीपं गत्वा तम् उक्तवान् - ''मम पिता भवतः पुत्रीं परिणेतुम् इच्छति। कृपया भवान् अङ्गीकरोतु'' इति।

तदा दाशराजः उक्तवान् - ''एतस्याः नाम सत्यवती। एषा उपरिचरनामकस्य वसोः पुत्री। उपरिचरवसुः एतां मह्यम् अर्पयन् माम् उक्तवान् अस्ति - 'योग्यं वरम् अन्विष्य एतस्याः विवाहं कारयतु' इति। अष्टवसुषु अन्यतमस्य पुत्रः देवलः एतां परिणेतुम् इष्टवान् आसीत्। किन्तु अहं न अङ्गीकृतवान्। भवतः पिता परिणेतुम् इच्छति चेत् अवश्यम् अङ्गीकरोमि अहम्। मम इच्छा अस्ति यत् - मम पुत्र्यां यः पुत्रः जायते, सः एव अग्रे महाराजः भवतु इति। किन्तु वीराग्रेसरः महायोधः भवान् इदानीम् एव युवराजपदव्याम् अस्ति। अतः मम दौहित्रः कथं वा महाराजः भवितुम् अर्हति? एतस्मात् कारणात् एव अहम् एतद्विवाहविषये किञ्चिदिव आतङ्कम्

अनुभवन् अस्मि'' इति।

एतत् श्रुत्वा देवव्रतः दाशराजम् उक्तवान् – ''एवं तर्हि अहम् इदानीं भवतः पुरतः एव प्रतिज्ञां करोमि। अहं मम पितुः राज्यं वा महाराजपदवीं वा सर्वथा न इच्छामि। सत्यवत्यां यः पुत्रः जनिष्यते, सः एव अग्रे राजा भविष्यति'' इति।

तदा दाशराजः सन्देहेन उक्तवान् – ''एतादृशप्रतिज्ञां सर्वे कर्तुं न इच्छन्ति। भवान् राज्यत्यागं कुर्यात्, किन्तु भवतः पत्नीपुत्रादयः तथा कर्तुं न शक्नुवन्ति। ते तु 'भवान् एव राजा भवतु' इत्येव इच्छन्ति खलु'' इति।

दाशराजस्य सन्देहं निवारयितुम् इच्छन् देवव्रतः उक्तवान् – ''दाशराज! राज्यत्यागः क्रियते मया इति इदमिदानीं अहं प्रतिज्ञां कृतवान् अस्मि। तथापि मयि भवतः विश्वासः न उत्पन्नः इति कारणतः पुनरपि प्रतिज्ञां करोमि यत् – अहं विवाहितः न भविष्यामि इति। अहं विवाहितः न भविष्यामि इति कारणतः मम पुत्राः न भविष्यन्ति। अतः भवान् निरातङ्कं सत्यवत्या सह मम पितुः विवाहं कारयतु कृपया'' इति।

देवव्रतस्य वचनेन सन्तुष्टः दाशराजः शन्तनु-सत्यवत्योः विवाहं कारितवान्।

'विवाहितः न भविष्यामि, राज्यत्यागं च करिष्यामि' इति देवव्रतः भीषणप्रतिज्ञां कृतवान् इति कारणतः एव सः भीष्मनाम्ना ख्यातः अभवत्।



शन्तनु-सत्यवत्योः चित्राङ्गदः विचित्रवीर्यः च इति द्वौ पुत्रौ जातौ। पुत्रौ यदा अल्पवयस्कौ आस्तां, तदा एव शन्तनुः दिवङ्गतः। भीष्मः पितुः शन्तनोः अन्त्यसंस्कारादिकं कृत्वा सत्यवत्याः पुत्रस्य चित्राङ्गदस्य पट्टाभिषेकं कारितवान्।

चित्राङ्गदः बलशाली पराक्रमी च। अन्यराजानां विषये, वीराणां विषये वा चित्राङ्गदस्य गौरवभावना न आसीत्। अतः सः सर्वदा देवताभिः सह, दानवैः सह, गन्धर्वैः सह च युद्धं करोति स्म।

कदाचित् चित्राङ्गदनामकः गन्धर्वः सत्यवत्याः पुत्रं चित्राङ्गदं युद्धार्थम् आहूतवान्। सरस्वतीनद्याः तीरे उभयोः अपि घोरं युद्धं प्रवृत्तम्। गन्धर्वचित्राङ्गदः



स्वमायाशक्त्या चित्राङ्गदं युद्धे मारितवान्।

चित्राङ्गदस्य मरणात् सत्यवती भीष्मः च अतीव दुःखितौ। अनन्तरं भीष्मः विचित्रवीर्यं महाराजपदव्यां नियुक्तवान्। किन्तु सत्यवती भीष्मं प्रार्थितवती - ''विचित्रवीर्यः इतोऽपि लघुबालः। अतः भवान् एव राजकार्याणि निर्वहतु'' इति।

सत्यवत्याः आदेशानुसारं विचित्रवीर्यः भीष्मस्य मार्गदर्शनेन राज्यपालनं कृतवान्।

कानिचन वर्षाणि अतीतानि। विचित्रवीर्यः विवाहवयस्कः जातः। तेषु एव दिनेषु काशीराजः प्रकटनं कारितवान् यत् - मम पुत्रीणाम् अम्बा, अम्बिका, अम्बालिका इत्येतासां निमित्तं स्वयंवरम् आयोजयिष्यामि इति।

एतां स्वयंवरवार्तां श्रुत्वा भीष्मः काशीनगरं प्रति प्रस्थितवान्। स्वयंवरमण्डपे बहवः जनाः उपविष्टाः आसन्। भीष्मः अपि तत्र गतवान्। काशीराजः स्वपुत्रीः उद्दिश्य आगतानां विषये विवरणं वदति स्म। तदा भीष्मः उत्थाय सर्वान् उद्दिश्य - ''अहम् एताः कन्याः नेष्यामि, मम अनुजेन सह एतासां विवाहं निर्वर्तयिष्यामि'' इति घोषयन् अम्बाम् अम्बिकाम् अम्बालिकां च स्वरथे उपवेशितवान्। अनन्तरं च उक्तवान् यत् - भवतु यस्य कस्यापि यदि सामर्थ्यं स्यात्, तर्हि मया सह युद्धं कृत्वा एताः कन्याः वशीकर्तुम् अर्हन्ति इति।

एतत् श्रुत्वा स्वयंवरार्थम् आगताः सर्वे अपि भीष्मस्य उपरि आक्रमणं कृतवन्तः।

भीष्मः एकाकी सन् अपि सर्वैः सह वीरावेशेन युद्धं कृतवान्। कांश्चन मारितवान् अपि। एवं तत्र दारुणपरिस्थितिं निर्माय काशीराजस्य पुत्रीभिः सह हस्तिनापुरं प्रति प्रस्थितवान्। तदा साल्वनामकः राजा कश्चित् भीष्मेन सह युद्धार्थम् आगतवान्। युद्धे पराजयं प्राप्य पलायितवान् च।

अनन्तरं भीष्मः हस्तिनापुरं गत्वा काशीराजस्य तिसृणां पुत्रीणाम् अपि विचित्रवीर्येण सह विवाहं कारयितुं निश्चितवान्।

तदा तासु ज्येष्ठा अम्बा सविनयं भीष्मं प्रार्थितवती - ''अहं साल्वम् इष्टवती अस्मि। साल्वः अपि मयि अनुरागवान् अस्ति। स्वयंवरः यदि व्यवस्थितरीत्या प्रचलितः

स्यात्, तर्हि साल्वः एव मम पतिः अभविष्यत्। किन्तु भवतः कारणतः अहम् असहायिका अभवम्। इदानीं वा मम आशयं पूरयतु कृपया। एषः भवतः धर्मः'' इति।

भीष्मः एतद्विषये मन्त्रिभिः सह, बान्धवैः सह, पुरोहितैः सह च समालोचनं कृतवान्। सर्वेषाम् अङ्गीकारानुसारम् अम्बां साल्वसमीपं प्रेषितवान् भीष्मः। अनन्तरं च सः अम्बिकया अम्बालिकया सह च विचित्रवीर्यस्य विवाहं निर्वर्तितवान्।

विचित्रवीर्यः विवाहानन्तरं स्त्रीलोलुपः सन् राजकार्याणि त्यक्त्वा पत्नीभ्यां सह एव कालं यापयति स्म। कालक्रमशः क्षयरोगपीडितः मरणं प्राप्तवान्।

विचित्रवीर्यस्य मरणानन्तरं भीष्मः अनुजस्य अन्त्यसंस्कारादिकं कृत्वा, पुत्रशोकेन दुःखितायाः सत्यवत्याः सान्त्वनं कृतवान्।

कश्चन कालः अतीतः। सत्यवती कदाचित् भीष्मम् उक्तवती - ''वत्स! भवतः पितुः वंशोद्धारार्थम् आपद्धर्मानुसारं भवान् अम्बिकायाम् अम्बालिकायां वा पुत्रान् प्राप्तुम् अर्हति। यदि एतत् भवतः सम्मतं न, तर्हि योग्यां कन्यां परिणीय अस्माकं वंशं रक्षतु'' इति।

भीष्मः सत्यवत्याः एतत् वचनं न अङ्गीकृतवान्। अपि तु सः ताम् उक्तवान् - ''अहं मया कृतायाः प्रतिज्ञायाः भङ्गं कर्तुं सर्वथा न इच्छामि। मम निश्चयः कदापि परिवृत्तः न भविष्यति। भवत्या यत् आपद्धर्मः इति उक्तम्, तत् वस्तुतः अधर्मः एव। अन्यः कश्चन आपद्धर्मः अस्ति। सः धर्मः अपि ज्येष्ठैः मन्त्रिभिः सह च समालोचनं कृत्वा एव कार्यान्वितः करणीयः। आपद्धर्मः एवम् अस्ति - वंशरक्षणार्थं भवत्याः स्नुषाद्वयम् अपि सत्कुलप्रसूतस्य सकाशात् पुत्रं प्राप्तुम् अर्हति। पूर्वं यदा परशुरामः सर्वान् अपि क्षत्रियान् मारितवान्, तदा मृतानां क्षत्रियाणां पत्न्यः सत्कुलप्रसूतानां द्वारा पुत्रान् प्राप्य क्षत्रियवंशं रक्षितवत्यः। अतः तदनुसारम् एव अस्माभिः अपि इदानीं वंशरक्षणं करणीयम्'' इति।



# पारितोषिकम्

मगधराजः मणिभूषणः महाभारतकथाम् अतीव इच्छति स्म । सः बहुवारं महाभारतकथां श्रुतवान् आसीत् । सः तां कथां यस्मात् यस्मात् शृणोति, तस्मै तस्मै पारितोषिकरूपेण किमपि ददाति स्म ।

कदाचित् मणिभूषणः वृद्धाश्वम् आरुह्य उद्याने विहरन् आसीत् । तदा विदूषकः पाण्डवानां स्वर्गारोहणभागस्य अन्तिमभागस्य कथां श्रावितवान् ।

विदूषकाय किमपि पारितोषिकं दातव्यम् इति चिन्तयन् मणिभूषणः स्वकीयं वृद्धम् अश्वं विदूषकाय दत्तवान् । अनन्तरं विदूषकः स्वगृहं गतवान् ।

अनन्तरदिने विदूषकः पादाभ्याम् एव आगतवान् । तं दृष्ट्वा मणिभूषणः आश्चर्येण पृष्टवान् - ''अश्वः कुत्र अस्ति ? किमर्थं पादाभ्याम् आगतवान् भवान् ?'' इति ।

तदा विदूषकः उक्तवान् - ''प्रभो ! किमिति वदामि ? पाण्डवानां स्वर्गारोहणकथाभागं श्रुत्वा अश्वः अपि तेषां सेवार्थं गतवान्'' इति ।

'वृद्धः अश्वः दत्तः मया । सः इदानीं मृतः' इति विषयं विदूषकस्य कथनशैल्या ज्ञातवान् राजा मणिभूषणः उत्तमम् अश्वं विदूषकाय दत्तवान् ।





# अहङ्कारी मैनाकः

निरञ्जनपुरे मैनाकनामकः कश्चित् आसीत् । सः आत्मानं महापण्डितं मन्यमानः अतीव गर्वम् अनुभवति स्म । प्राचीनग्रन्थान् पठित्वा तत्रत्यान् लोपदोषान् सङ्ख्याति स्म सः । तेषां दुष्प्रचारकरणम् एव लक्ष्यम् आसीत् मैनाकस्य ।

मैनाकपण्डितः प्रसिद्धपण्डितानां सभासु अपि स्वकीयं पाण्डित्यं प्रदर्शयन् तत्र प्रशंसासत्कारादिकं प्राप्नुवन् सौशील्यदेशस्य राजधानीं मलयवतीं प्रति गतवान् ।

मलयवत्याः राजा सर्वोत्तमः । सः कवीन् पण्डितान् च सत्कुर्वन् तान् पोषयन् 'उत्तमः राजा' इति ख्यातिं प्राप्तवान् आसीत् । तस्य आस्थानस्थाः कवयः पण्डिताः च 'दिग्गजाः' इति प्रख्याताः आसन् । मैनाकस्य आगमनोद्देश्यं ज्ञात्वा राजा सर्वोत्तमः आस्थाने पण्डितैः सह चर्चार्थं मैनाकस्य अवकाशं कल्पितवान् ।

अनन्तरं मैनाकस्य विषयनिरूपणम् आरब्धम् । मैनाकस्य प्रवचनं शृण्वन्तः आस्थानपण्डिताः आश्चर्येण पश्यन्तः चिन्तयन्ति स्म यत् - अस्माभिः पठितानां प्राचीनग्रन्थानां व्याख्यानं भिन्नप्रकारेण एव निरूपयन् अस्ति एषः इति । मैनाकेन सह चर्चां कर्तुं तत्रत्येषु पण्डितेषु कोऽपि न उत्थितवान् ।

आस्थानपण्डितानां मौनम् एव तेषां पराजयः इति भावयन् मैनाकः अतीव गर्वितः ।

आस्थानपण्डिताः मौनं पराजयम् अङ्गीकृतवन्तः इति यत् तेन सर्वोत्तमः चिन्तितवान् यत् - एतत् महत् अपमानकरम् इति । मैनाकस्य वाक्प्रवाहः तु अनुस्यूततया प्रचलन् एव आसीत् । विषय-निरूपणसमये मैनाकः काश्चन सूक्तीः उदाहरन् एवम् उक्तवान् - ''अस्माकं

पूर्वजाः उक्तवन्तः सन्ति - 'सर्वे जनाः सुखिनो भवन्तु' इति । किन्तु एतत् वाक्यं न युज्यते । अत्र दोषः अस्ति । सर्वे अपि सुखेन एव जीवेयुः इति किमर्थं वक्तव्यम् ? 'सर्वे' इति पदेन चोराः, लुण्ठाकाः, दुष्टाः सर्वे सङ्गृहीताः भवन्ति । एते सर्वे अपि सुखेन जीवन्तु इति यदि प्रार्थयेम, तर्हि प्रपञ्चे जनजीवनरीतिः एव अव्यवस्थिता भवेत् । अतः 'सर्वे साधुजनाः सुखिनो भवन्तु' इति परिष्कारः क्रियते चेत् वरम्'' इति ।

एतत् श्रुत्वा सभायाम् आसीनाः सर्वे अपि प्रशंसापूर्वकं मैनाकं पश्यन्तः करताडनं कृतवन्तः । तावता दरहासनामकः विदूषकः कश्चित् उत्थाय उच्चस्वरेण उक्तवान् - ''भवतः अभिप्रायः आधाररहितः'' इति । दरहासः आरम्भतः अपि मैनाकस्य विषयनिरूपणशैलीं शृण्वन् अतीव जामितां अनुभवन् मैनाकस्य गर्वभङ्गार्थम् अवकाशं प्रतीक्षमाणः आसीत् ।

दरहासस्य वचनं श्रुत्वा मैनाकः उपेक्षया दरहासं पश्यन् पृष्टवान् - ''किमर्थम् आधाररहितः मम अभिप्रायः ? मम वचने कः दोषः अस्ति ?'' इति ।

एतत् श्रुत्वा दरहासः उक्तवान् - ''अहङ्कारी भवान् महता गर्वेण अहम् एव श्रेष्ठः पण्डितः इति चिन्तयन् विषयनिरूपणं कुर्वन् अस्ति । 'सर्वे जनाः सुखिनो भवन्तु' इति या सूक्तिः अस्ति, सा शास्त्रज्ञानिभिः त्रिकालज्ञानिभिः अस्माकं पूर्वजैः अनुभवबलात् उक्ता अस्ति । तैः बहु विचिन्त्य एषा सूक्तिः उक्ता अस्ति । मम कथनार्थं यदि भवान् अवकाशं कल्पयति, तर्हि भवता



उक्तम् आधाररहितम् इति निरूपयिष्यामि अहम्'' इति।

दरहासस्य वचनं श्रुत्वा महता कष्टेन आत्मनः कोपं निगृह्य मन्दस्वरेण मैनाकः उक्तवान् - ''भवतः आशयं वदतु तावत्'' इति।

तदा दरहासः गाम्भीर्येण उक्तवान् - ''वास्तविकं सुखं नाम किम् ? यः प्रभूतधनवान् अस्ति, अमृतशिलासौधे निवसति च सः सुखी इत्यर्थः वा ? न। सुखं नाम मनसः शान्तिः । राक्षसप्रवृत्तियुताः चोराः लुण्ठाकाः इत्यादयः सुखिनः सर्वथा न । यतः यद्यपि तेषां दारिद्र्यं नास्ति, तथापि तेषां राजभटेभ्यः भीतिः अस्ति एव। कदा अस्माकं विपत् उपस्थिता भवेत् इति मानसिकचिन्तया ते सुखजीवनं यापयितुं न शक्नुवन्ति। तादृशाः चोरादयः अपि सुखिनः भवन्तु इत्यस्य तात्पर्यम् - 'ते दुष्टकार्याणि परित्यज्य सत्कार्याणि एव कुर्वन्तः सुखमयं जीवनं यापयन्तु' इति । तन्नाम 'सर्वे जनाः सुखिनो भवन्तु' इत्यस्य अन्तरार्थः - 'सर्वे अपि सुखस्य मूलम् अन्विष्य, तदनुसारं तृप्तिकरं जीवनं यापयितुं मनसः शिक्षणं प्राप्य सुखजीवनं यापयेयुः' इति'' इति।

अपरक्षणे एव सभा करताडनध्वनिना प्रतिध्वनिता । मैनाकस्य मुखं विवर्णं जातम्।

तदा दरहासः मैनाकम् उद्दिश्य पुनः उक्तवान् - ''भवान् अत्यन्तं मेधावी चतुरः च इत्यत्र नास्ति सन्देहः । किन्तु भवता प्राचीनग्रन्थाः ये अधीताः सन्ति, तेषु स्थिताः धर्मसूक्ष्माः भवता अवगन्तव्याः। सुलभतया जनानां बोधः यथा भवेत्, तथा विषयः प्रतिपादनीयः च । ग्रन्थेषु विद्यमानाः उत्तमाः गुणाः एव अस्माभिः स्वीकरणीयाः इति अहं सविनयं प्रार्थयामि'' इति।

मैनाकः एतत् श्रुत्वा किमपि अवदन् सभामन्दिरात् निर्गतवान् । दरहासस्य समयस्फूर्त्या बुद्धिमत्तया च राजा सर्वोत्तमः, कवयः, पण्डिताः च अतीव सन्तुष्टाः सन्तः दरहासम् अभिनन्दितवन्तः।



# र स वा र्ताः



## सिंहः पश्चात्तापम् अनुभूतवान्

गते मे-मासे कुवैत्‌देशस्य किञ्चन नगरं प्रति 'सर्कस्' प्रदर्शकाः आगतवन्तः । कदाचित् सायङ्कालीनप्रदर्शने केचन कार्यक्रमाः समाप्ताः । सीजर्‌नामकः सिंहः पञ्जरतः आगत्य वर्तुले स्थितवान् । तावता सिंहस्य शिक्षिका एलीना टिपा अपि तत्र आगता । एकस्मात् स्थानात् अपरं स्थानं प्रति लङ्घनसमये अकस्मात् सः सिंहः अधः पतितवान् । प्रेक्षकाः यथापूर्वं करताडनं न कृतवन्तः । एतस्मात् कुपितः सिंहः झटिति उत्थाय शिक्षिकां कण्ठे दष्टवान् । शिक्षिका तत्रैव मृता अभवत् । अनन्तरं सिंहः एलीनायाः शरीरस्य पार्श्वे एव शयनम् अकरोत् । किञ्चित्कालानन्तरं महता कष्टेन उत्थाय स्वपञ्जरस्य अन्तः गतवान् सिंहः । अनन्तरं सः जलं वा आहारं वा न स्वीकृतवान् । उपवासकारणतः सः सिंहः सप्ताहद्वयानन्तरं मरणं प्राप्तवान् । एतां घटनां विवृण्वन् सर्कस्-व्यवस्थापकः सीजर् टीपा खेदेन वदति - "प्रायशः सिंहः आत्मना यत् कृतं, तदर्थं खिन्नः स्यात् । वयं मृगाणां द्वारा क्रीडां दर्शयामः, परन्तु तेषां मनोभावम् अवगन्तुं न शक्नुमः" इति ।



## मकरस्य प्रतीकारः

आस्ट्रेलियादेशस्य ककाडू नेशनल् उद्यानं किञ्चन यात्रास्थलम् । तत्रत्याः मकराः प्रसिद्धाः । बहवः जनाः मकराणां दर्शनार्थं तत्र गच्छन्ति । तत्र उपाहारमन्दिरे यत् भोजनं लभ्यते, तदपि मकरमांसेन निर्मितम् एव । तत्रत्यः पाचकः राबर्ट् मिनाहन्‌नामकः युवकः सर्वदा मकरमांसस्य रुचिं वर्णयति स्म । सः कदाचित् समीपस्थायां नद्यां तरति स्म । तदा कश्चन मकरः तं खादितुम् इच्छन् अनुसृत्य वेगेन आगतवान् । तावता तत्र आगतः तस्य स्नेहितः तं जागरूकतया नदीतीरम् आनीतवान् । राबर्ट् मिनाहन् यद्यपि प्राणापायात् रक्षितः, तथापि मकरस्य आक्रमणात् सः समग्रशरीरे व्रणितः अभवत् ।



# पिशाचानां भूमिः

पूर्वं कोसलस्य सीमाप्रदेशे रङ्गपुरनामकः ग्रामः आसीत् । सः ग्रामः अत्यन्तं दरिद्रावस्थायाम् आसीत् । यतः तं ग्रामं परितः तिसृषु दिक्षु अपि भूमिः सिकतामयी आसीत् । तस्य ग्रामस्य उत्तरभागे विद्यमाना भूमिः फलवती एव आसीत् । तस्यां भूमौ तद्ग्रामीणाः बहूनि वर्षाणि यावत् कृषिकार्यं कुर्वन्तः जीवनं यापयन्ति स्म अपि । किन्तु इदानीं केभ्यश्चित् वर्षेभ्यः तत्र कृषिकार्यं न प्रचलति । तस्मिन् प्रदेशे पिशाचाः निवसन्ति इति ग्रामीणानां चिन्तनम् । तत्प्रदेशे ये कृषिकार्यं कर्तुं प्रयत्नं कृतवन्तः, ते सर्वे पिशाचपीडाम् अनुभूतवन्तः आसन् । पुनः केचन मरणं प्राप्तवन्तः आसन् । अन्ये केचन उन्मत्ताः जाताः आसन् अपि । अतः तद्ग्रामीणाः प्राणभीत्या तां भूमिम् एव परित्यक्तवन्तः आसन् । एतस्मात् कारणात् रङ्गपुरस्य जनाः दारिद्र्यस्य परमावधिं प्राप्तवन्तः आसन् ।

रङ्गपुरस्य सुबुद्धिनामकः युवकः कश्चित् बाल्ये एव अध्ययनार्थं काशीं गतवान् आसीत् । तत्र अनेकानि शास्त्राणि अधीत्य लोकज्ञानं च सम्पाद्य स्वग्रामं प्रत्यागतवान् सः । सुबुद्धिः ग्रामस्थान् जनान् आहूय पृष्टवान् - ''ग्रामस्य उत्तरभागे या भूमिः अस्ति, तत्र किमर्थं कृषिकार्यं न प्रचलति ? आहारं विना कथं जीवनं यापयन्तः सन्ति भवन्तः ?'' इति ।

तदा ग्रामीणाः खेदेन उक्तवन्तः - ''वयं जीवन्तः न स्मः, अपि तु मरणावस्थायां स्मः । ग्रामस्य उत्तरभागे या भूमिः अस्ति, तस्यां पिशाचाः निवसन्तः अस्मान् पीडयन्ति । प्रतिदिनं रात्रिसमये पिशाचैः नीयमानायाः शिबिकायाः शब्दं शृणुमः वयम् । तत्रत्येषु वटवृक्षेषु स्थिताः पिशाचाः अस्माकं दृष्टिगोचराः भवन्ति । एतत् सर्वं न

' 'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा' '

काल्पनिकम्, अपि तु वस्तुस्थितिः'' इति।

ग्रामीणानाम् अज्ञानं मुग्धतां च दृष्ट्वा सुबुद्धिः आश्चर्यचकितः, खिन्नः अपि।

ग्रामीणानां या पिशाचभीतिः अस्ति, तस्याः निवारणार्थं काचित् व्यवस्था चिन्तनीया इति विचिन्त्य सुबुद्धिः तद्ग्रामीणान् अन्यान् कांश्चन पिशाचविषये पृष्टवान्। सर्वे अपि उक्तवन्तः यत् - पिशाचस्य अस्तित्वं तु सत्यस्थितिः एव इति।

कदाचित् सुबुद्धिः रात्रिसमये पिशाचानाम् अस्तित्वं परीक्षितुम् इच्छन् गृहात् बहिः गतवान्। मार्गः निर्जनः आसीत्। सः ग्रामस्य उत्तरदिशि गतवान्। 'पिशाचानां भूमिः' इति या प्रसिद्धा आसीत् तत्र सुबुद्धिना वटवृक्षः दृष्टः। तस्मिन् वटवृक्षे श्वेतवर्णीयं पिशाचाकारकं किमपि दृष्टं सुबुद्धिना। अकस्मात् महान् अग्निः दृष्टः। अपरक्षणे एव निर्वाणः च। महान् अट्टहासः श्रुतः।

एतत् सर्वं दृष्ट्वा सुबुद्धिः अतीव कुपितः। आत्मना किं किं कार्यं साधनीयम् अस्ति इति चिन्तयन् सुबुद्धिः ततः साक्षात् गृहं गत्वा शयनं कृतवान्।

अनन्तरदिने सायङ्कालसमये सुबुद्धिः अत्यावश्यकानि नित्योपयोगीनि वस्तूनि स्वीकृत्य तद्ग्रामस्थान् उद्दिश्य - ''अहं ग्रामान्तरं गच्छन् अस्मि'' इति उक्त्वा ततः प्रस्थितः।

सूर्यास्ततः पूर्वम् एव प्रस्थितः सुबुद्धिः ग्रामस्य उत्तरभागं गतवान्। आत्मना आनीतानि वस्तूनि एकत्र गुल्मप्रदेशे अन्येषां





दृष्टिगोचरं यथा न स्यात्, तथा स्थापितवान् । वटवृक्षं परितः यः प्रदेशः अस्ति, तत्र सर्वत्र सूक्ष्मं परिशीलितवान् । 'पिशाचनाम्ना जनान् ये भाययन्तः सन्ति, ते वस्तुतः न पिशाचाः, अपि तु मानवाः एव' इति यः सन्देहः आसीत् सुबुद्धेः, सः सन्देहः दृढः जातः । यतः वटवृक्षं परितः भूमौ मानवानां पादचिह्नं दृष्टं सुबुद्धिना । किन्तु ते मानवाः रङ्गपुरग्रामीणाः तु न इति निश्चितवान् सुबुद्धिः ।

यदा सूर्यः अस्तं गतः, तदा सुबुद्धिः कृष्णवर्णीयं वस्त्रं धृतवान् । आत्मना आनीतम् आहारं खादित्वा जलं पीतवान् । अनन्तरं वटवृक्षम् आरुह्य उपविष्टवान् । अकस्मात् निद्रा आगता चेदपि वृक्षतः अधःपतनं यथा न भवेत्, तथा स्वशरीरं वृक्षशाखां च रज्ज्वा बद्धवान् । अनन्तरं पिशाचान् एव प्रतीक्षमाणः उपविष्टवान् ।

मध्यरात्रसमये पञ्चषाः मानवाः तत्प्रदेशम् आगतवन्तः । तेषां व्यवहारेण ज्ञायते स्म यत् - सः प्रदेशः तेषां सुपरिचरितः इति । ते एकत्र अग्निं ज्वालितवन्तः । अग्नौ धूपं स्थापितवन्तः । तदा अभितः महती ज्वाला उद्गता । अपरक्षणे एव ज्वाला निर्विण्णा जाता च । अनन्तरं ते पाकम् आरब्धवन्तः । तेषु अन्यतमः एकस्मिन् दण्डे श्वेतवस्त्रं बद्ध्वा तं दण्डं वटवृक्षसमीपे इतस्ततः चालितवान् । अपरः शृगालस्य ध्वनिम् अनुकरोति स्म तदा तदा । अन्यः कश्चित् उच्चैः अट्टहासं करोति स्म ।

एवं ते मनुष्याः बहुसमयपर्यन्तं पिशाचक्रीडां क्रीडितवन्तः । रात्रेः तृतीये यामे पुनः दश जनाः तत्र आगताः । तेषां हस्तेषु गोणीसदृशाः बन्धाः आसन् । ते अग्नियुक्तं काष्ठमेकं स्वीकृत्य वटवृक्षस्य अधः गतवन्तः । तत्र एका महती शिला आसीत् । तां शिलाम् अपसार्य एकं गर्तं कृतवन्तः । तदा इतोऽपि काश्चन गोण्यः दृष्टाः सुबुद्धिना । ते मनुष्याः आत्मना आनीताः गोणीः तस्मिन् गर्ते स्थापयित्वा, गर्तं मृत्तिकया पूरितवन्तः । यथापूर्वं शिलां तदुपरि स्थापयित्वा, पुनः कञ्चित् कालं यावत् पिशाचक्रीडां क्रीडित्वा सर्वे ततः निर्गताः ।

तेषां गमनानन्तरं सुबुद्धिः निद्रां कृतवान् । प्रातःकाले उत्थाय रङ्गपुरं प्रति

गतवान् ।

सुबुद्धिं दृष्ट्वा आश्चर्येण ग्रामीणाः पृष्टवन्तः - "ह्यः एव भवान् अन्यत्र गच्छामि इति उक्तवान् खलु ! कुत्र गतवान् आसीत् भवान् ? कथम् एतावच्छीघ्रं ग्रामं प्रत्यागतवान् ?" इति ।

तदा सुबुद्धिः उक्तवान् - "अहम् अन्यं ग्रामं न गतवान् एव । आरात्रि अहं पिशाचैः सह पिशाचभूमौ एव समयं यापितवान्" इति ।

"पिशाचस्य दर्शनानन्तरम् अपि भवान् जीवति वा ?" इति आश्चर्येण पृष्टवन्तः ग्रामीणाः ।

तदा सुबुद्धिः उक्तवान् - "ते अपि अस्मत्सदृशाः एव पिशाचाः । वयं सर्वे सम्भूय तान् सम्मुखीकृत्य तेषां पीडातः मुक्ताः भवितुं शक्नुमः । मया सह आगच्छन्तु, तेषां कार्यं दर्शयिष्यामि" इति ।

भीत्या पिशाचभूमिं प्रति गमनं बहवः न अङ्गीकृतवन्तः । धैर्यवन्तः युवकाः केचन सुबुद्धिना सह पिशाचभूमिं प्रति प्रस्थिताः ।

सुबुद्धिः तान् युवकान् पिशाचभूमिं नीत्वा तान् उद्दिश्य उक्तवान् - "पश्यन्तु, पिशाचैः यः पाकः क्रियते, तदर्थम् उपयुज्यमाना चुल्लिः । एतत् दग्धकाष्ठानां भस्म । पिशाचाः पाकं कृत्वा भोजनं कुर्वन्ति इति विषये विश्वसन्ति वा भवन्तः ? ते वस्तुतः पिशाचाः एव न, अपि तु चोराः । पञ्चदश जनाः ये चोराः सन्ति, ते अत्र पिशाचक्रीडां क्रीडन्ति । अस्मिन् वटवृक्षे आरात्रि उपविश्य चोराणां व्यवहारं प्रत्यक्षतः दृष्टवान् अस्मि अहम् । ते चोराः



रङ्गपुरस्य सीमाप्रदेशे यत् अरण्यम् अस्ति, तत्र निवसन्ति प्रायः। प्रतिदिनं रात्रौ चौर्यतः प्राप्तं सर्वम् अत्र आनीय वटवृक्षस्य अधः गर्तं कृत्वा तत्र गोपयन्ति । एतस्याः शिलायाः अपसारणेन भवन्तः एव द्रष्टुम् अर्हन्ति इदानीम्'' इति।

अनन्तरं सर्वे युवकाः सम्भूय शिलाम् अपसारितवन्तः । शिलायाः अधोभागे खननेन शताधिकाः गोण्यः लब्धाः। सुबुद्धिः अन्ये युवकाः च ताः गोणीः स्वीकृत्य ग्रामं गतवन्तः।

सुबुद्धिः ग्रामस्थान् सर्वान् आहूय उक्तवान् - ''अस्माकं दारिद्र्यावस्थायाः कारणीभूताः एते चोराः कठोरं दण्डनीयाः। अतः एतान् चोरान् गृहीत्वा महाराजसमीपं नयाम। इदानीम् अस्माभिः प्राप्तं धनम् अपि महाराजाय अर्पयाम । एतस्मात् सन्तुष्टः राजा यदि किमपि पारितोषिकं ददाति, तर्हि तत् सन्तोषेण स्वीकुर्मः। अनन्तरं च उत्तरदिशि विद्यमानायां भूमौ सर्वे सम्भूय कृषिकार्यं कुर्मः'' इति।

ग्रामीणाः सुबुद्धेः एतत् वचनम् अङ्गीकृतवन्तः।

अनन्तरदिने रात्रौ पिशाचभूमिम् आगताः चोराः वटवृक्षस्य अधोभागे गर्ते विद्यमानाः गोण्यः न सन्ति इति ज्ञात्वा आश्चर्यचकिताः । तावता रङ्गपुरस्य ग्रामीणाः तत्र गत्वा तान् गृहीत्वा महाराजसमीपं नीतवन्तः।

द्वादशवर्षेभ्यः नगरे सर्वदा चौर्यं प्रचलत् आसीत्। तथापि चोरान् ग्रहीतुं न कोऽपि शक्तवान् आसीत्। इदानीं रङ्गपुरस्य सुबुद्धिः चोराणां ग्रहणे महत् साहसं कृतवान् इति ज्ञात्वा सन्तुष्टः राजा पारितोषिकदानेन सुबुद्धिं सत्कृतवान्। चोराणां ग्रहणे साहाय्यं कृतवद्भ्यः ग्रामीणेभ्यः अपि महाराजः पञ्चगोणीपरिमितं धान्यं पारितोषिकरूपेण दत्तवान्। अनन्तरकाले ग्रामीणाः रङ्गपुरस्य उत्तरभागे कृषिकार्यं कुर्वन्तः उत्तमं फलसमृद्धिं प्राप्तवन्तः। तस्मात् रङ्गपुरस्य जनानां दारिद्र्यम् अपगतम् अभवत्। सर्वे बहुकालं सन्तोषेण जीवितवन्तः।



# प्रकृतिवैचित्र्याणि

## समुद्रगजः



**स**मुद्रे वासं कुर्वत्सु प्राणिषु एव बृहत्तमः प्राणी तिमिङ्गिलः । किन्तु 'सील्' नामकः जलचरः 'समुद्रगजः' इति कथ्यते । एषः दर्शनेन महामत्स्याकारकः । धूसरवर्णीयाः 'सील्' जलचराः अपि लोके भवन्ति । समुद्रगजस्य दैर्घ्यं सामान्यतः ६ मीटर् (२० फूट्), भारश्च ४ टन् । समुद्रगजाः प्रसूत्यर्थं तीरम् आगच्छन्ति ।



## वृक्षशाखातः नीडरक्षणम्

**प**क्षिणः सामान्यतः वृक्षस्य शाखायाम् एव स्वनीडनिर्माणं कुर्वन्ति । एतत् किमर्थं स्यात् ? पक्षिणः अण्डात् यदा बहिः आगच्छन्ति, तदा ते डयनसमर्थाः न भवन्ति । तेभ्यः रक्षणम् आवश्यकम् । इतरप्राणिभ्यः आत्मनः रक्षणार्थं योग्यं स्थलं वृक्षशाखाः एव । मार्जारसदृशाः प्राणिनः वृक्षम् आरोढुं शक्नुवन्ति । अतः तादृशप्राणिभ्यः स्वशिशून् रक्षितुं पक्षिणः वृक्षस्य शाखायाः अग्रभागे स्वनीडं रचयन्ति । यतः यः कोऽपि प्राणी यदि वृक्षशाखायाः अग्रभागं गच्छति, तर्हि शाखा छिन्ना भवति । आरूढः प्राणी अधः पतति । एतस्मात् प्राणिनः प्राणभयात् वृक्षस्य शाखायाः अग्रभागं न गच्छन्ति । पक्षिणः न केवलं वृक्षशाखायाः अग्रभागे, अपि तु अन्येषां प्राणिनां पक्षिणां वा दृष्टिगोचरता यथा न स्यात्, तथा स्वनीडान् रचयन्ति ।



## शिला अपि वर्णं परिवर्तयति ।

**आ**स्ट्रेलियादेशे 'एयेर्स्‌राक्' नामिका काचित् अपूर्वा शिला अस्ति । सा शिला प्रतिदिनं सूर्योदयात् सूर्यास्तं यावत् स्ववर्णं परिवर्तयति । सूर्यस्य स्थितिम् आधारीकृत्य सा शिला वर्णपरिवर्तनं करोति । एतस्याः शिलायाः औन्नत्यं सामान्यतः १२०० फूट् । शिलां परितः विद्यमानः प्रदेशः समतलः अस्ति इति कारणतः तत्प्रदेशस्य विशेषगाम्भीर्यम् अनुभवगोचरं भवति । ५ मैल्-विशाला एषा शिला वस्तुतः रक्तवर्णीया । सूर्योदयसमये धूसरवर्णतां प्राप्नोति एषा । मध्याह्नसमये पीतच्छायाम् अरुणच्छायां च प्राप्नोति एषा । १२० वर्षेभ्यः पूर्वम् अन्विष्टायाः एतस्याः नाम सर् हेन्री एयर्स शिला इति । यतः तत्काले हेन्री एयर्स् प्रधानमन्त्री आसीत् ।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां जनवरी - १९९५ मासे प्रकटयिष्यामः ।



S.G. Seshagiri



S.G. Seshagiri

• उपरितनं चित्रद्वयं पश्यन्तु । • युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । • अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । • स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । • शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । • अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'सप्टम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

**प्रथमचित्रम् - विद्याधनं सञ्चिनुत प्रभूतं यदस्ति चेन्नैव कदापि भारः ।**

**द्वितीयचित्रम् - यन्नास्ति चेज्जीवनमर्थहीनं भवेत् श्रमः स्याच्च महांश्च भारः ।**

प्रेषकः - विश्वनाथ जोशी, 'शिवकृपा', भगवतीनगरम्, ढवली, फोण्डा, गोवा - ४०३ ४०१

---




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI


---

